## आशादृष्टिः- सद्यःप्रवृत्तिः

**अजरामरवत् प्राज्ञः विद्याम् अर्थं च साधयेत् ।**
**गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥**

कार्यकरणार्थं कश्चन युक्तः कालः भवति । तत्तत् कार्यं तत्तत् काले कृतं चेदेव शोभते । बालचेष्टाः बाल्यावस्थायाम् एव युक्ताः । तरुणः यदि बालवत् व्यवहरति तर्हि सः उपहासास्पदः भवति ।

तर्हि विद्यार्जनं धनसम्पादनं च कदा करणीयम् ? किं तारुण्ये, उत वार्धक्ये ? 'सद्यः एव मम मरणं भवेत्' इति चिन्तयता विद्यार्जनं धनसम्पादनं वा न करणीयम् ?

वस्तुतः विद्यार्जनार्थं धनसम्पादनार्थं च सर्वदा सुकालः एव । एतद्द्वयं सदा करणीयम् अपि । एतत्सन्दर्भे ''मम वार्धक्यं मरणं वा न भविष्यति, मम इतोऽपि सुदीर्घं जीवनम् अस्ति'' इति आशावादिना भवितव्यम् ।

किन्तु धर्माचरणे तु एवं न । 'मरणं मम पुरतः एव स्थितम् अस्ति' इति चिन्तयन् पुरुषः धर्मम् आचरेत् । यदि जीवनं सुदीर्घम् अस्ति इति चिन्तयति तर्हि पुनः कदाचित् आचरेयम् इति भावना उत्पद्येत ।

अवश्यं करणीयानाम् नित्यकर्मणां विषयेषु अपि एवम् एव । तत्क्षणे एव प्रवर्तनीयम् । 'जीवनं सुदीर्घं, पुनः कदाचित् करिष्यामि' इति दृष्टिः अत्र अनुचिता एव ।

एवं च धर्मविषये स्वयंपालितनियमादीनां विषये च सद्यःप्रवृत्तिः, धनसम्पादने विद्यार्जने च आशादृष्टिः एतत् उभयम् अपि प्राज्ञस्य लक्षणम् ।



# चन्दमामा

सप्टम्बर – १९८५

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

एतत् विज्ञानयुगम्। वैज्ञानिकविषयाः सर्वासु अपि भाषासु प्रतिपाद्यमानाः सन्ति। किन्तु सर्वासाम् अपि भाषाणाम् एका एव समस्या- पारिभाषिकशब्दाः न लभ्यन्ते।

स्वयं शब्दनिर्माणे तु तासां तावती शक्तिः नास्ति। अतः ताः अन्यभाषाम् आशादृष्ट्या पश्यन्ति, तत्रापि विशिष्य संस्कृतम्। संस्कृतस्य तु शब्दनिर्माणविषये असाधारणशक्तिः। एतस्याः भाषायाः एतच्छक्तेः पूर्णतया परिगणना प्रायः दुष्करा एव।

संस्कृतस्य शक्तिः महती इति तु सत्यम्। किन्तु तस्य वर्तमान-परिस्थितिः? स्वयं शब्ददारिद्र्यम् अनुभवति इदानीम्। बहोः कालात् शब्दनिर्माणम् एव न जातम्। एवं च विद्यमाना अपि शक्तिः निरुपयोगिनी जाता।

कालानुगुणं यदि संस्कृतेन शब्दाः निर्माय दत्ताः स्युः तर्हि कियान् उपकारः कृतः अभविष्यत्! संस्कृतस्यापि महोन्नतिः सिद्धा अभविष्यत् च।

एषः अवकाशः सर्वथा च्युतः इति न। इदानीम् अपि वयं कृतज्ञतापात्रं भवितुं शक्नुमः।

साधनम् उत्तमं स्यात् नाम, तेन उपयोगं प्राप्तुं कश्चित् कर्ता भवेत् किल? स च सोत्साहम् उद्युक्तः अपि भवेत्।

सम्पुटः-२ सप्टम्बर-८५ सञ्चिका-६

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-



## चन्दमामा प्रजल्पति

### भारतीयप्रथमनाणकानि



क्रि. श. तृतीयशतके भारते नाणकानि प्रथमतया व्यवहारे आनीतानि। तानि रजतमयानि आसन् इति अलीघर् विश्व-विद्यालयस्य प्राध्यापकः इर्फान् हबीब् स्वाभिप्रायं प्रकटयति।

### नीरसचलचित्राय पारितोषिकम्

उत्तमचलचित्राणां कृते विविधमूल्यकानि पारितोषिकाणि दातु जगति विभिन्नसंस्थाः सन्ति। किन्तु यानि अतीव नीरसानि चित्राणि भवन्ति तेभ्यः पारितोषिकं दातुं 'न्यूजर्सी' नगरे काचित् समितिः रचिता अस्ति। 'नीरसतमस्य चित्रस्य चयनार्थम् अस्माकं सदस्यैः बहुवारं दीर्घकालं निद्रा करणीया आपतिता' इति वदति तस्याः समितेः कार्यदर्शी।





### फिल्म् विना एक्सरे चित्रम्

फिल्म् विना एव एक्सरे चित्रग्रहणं साध्यम् इति प्रपञ्चे सर्व-प्रथमं जपानदेशीयाः निरूपितवन्तः। एतदनुसारं क्षणमात्रेण दूरदर्शकयन्त्रस्य फलके एक्सरे चित्रं प्रतिफलितं भवति।

## भवन्तः जानन्ति वा?

१. हर्षवर्धनस्य शासनकाले कः चीनादेशीयः यात्रिकः सन्दर्शकरूपेण भारतम् आगतवान्?

२. द्वितीयः पुलिकेशी कस्मिन् वंशे जातः?

३. 'कुतुबमीनार' भवनस्य उन्नतशिखरं निर्मातुं प्रवृत्तः सन् समाप्तेः पूर्वम् एव मरणं प्राप्तः मोगलमहाराजः कः?

४. सिंहासनारोहणसमये अकबरमहाराजस्य किं वयः आसीत्?

५. छत्रपतिशिवाजिमहाराजस्य पितुः नाम किम्?

(उत्तराणि ६४तमे पृष्ठे)



# निजस्वरूपम्

एकदा नारदः आकाशमार्गेण गच्छन् आसीत्। तदा सः देवदूताभ्यां स्वर्गलोकं प्रति नीयमानं कश्चित् पुरुषं दृष्टवान्। सः देवदूतयोः समीपं गत्वा पृष्टवान्- "एषः कः? किमर्थम् एषः स्वर्गं नीयते?" इति।

तदा देवदूतौ उक्तवन्तौ- "देवर्षे! एषः दामोदरनामकः। आजीवनम् एषः पापानि एव आचरितवान्। तथापि केन कारणेन एतेन स्वर्गः प्राप्तः इति आवाम् अपि न जानीवः" इति।

देवदूतयोः उत्तरेण नारदः आश्चर्यचकितः। यैः पापकार्याणि आचरितानि ते कथम् अपि स्वर्गं न प्राप्नुवन्ति। एषः दामोदरः आजीवनं पापम् आचरितवान्। तर्हि एतस्य स्वर्गप्राप्तिः कथम्? एतत् रहस्यं ज्ञातुम् इच्छन् नारदः यमधर्मरायस्य समीपं गतवान्।

यमधर्मरायः नारदं स्वागतीकुर्वन् योगक्षेमं पृष्टवान्। नारदः विश्रान्त्यनन्तरम् पृष्टवान्- "यमराज! यः आजीवनं पापम् एव आचरितवान् तं भवान् स्वर्गं प्रेषयन् अस्ति। किन्तु एतत् कथं शक्यते?" इति।

यमराजः हसन् उक्तवान्- "मुनिवर्य! दामोदरनामकः एषः मनुष्यः जन्मना निर्धनः। एषः आजीवनं पापानि एव आचरितवान्। अतः नरकः प्राप्तव्यः आसीत् तेन। किन्तु कदाचित् कष्टपीडितः अन्यः निर्धनः एतस्य साहाय्यं प्रार्थितवान्। दामोदरः तस्य दुःस्थितिं दृष्ट्वा खेदं प्रकटयन् उक्तवान्- "मित्र! अहम् अपि निर्धनः। यदि मम समीपे धनं स्यात् तर्हि अवश्यं साहाय्यम् अकरिष्यम् इति। सः एतत् वचनं हृदयपूर्वकम् उक्तवान् आसीत्। अतः पूर्वकृतानि पापानि सम्पूर्णतः क्षालितानि अभवन्। अवशिष्टपापस्य फलेन नरकदर्शनं प्राप्य इदानीं सः स्वर्गं



गच्छन् अस्ति'' इति।

''यमराज! अहं चिन्तयामि-तस्य व्यवहारेण भवान् वञ्चितः इति। भवान् तं सम्यक् परिशीलितवान् वा''? इति पृष्टवान् नारदः।

''वञ्चना! किं वदति भवान्? अहं कदाचित् वा वञ्चितः भवेयम्?'' इति यमराजः आश्चर्येण पृष्टवान्।

''आम्! भवान् निश्चयेन वञ्चितः। यः सज्जनः सहानुभूतिपरः च भवति सः यावदपि दीनावस्थां प्राप्तः स्यात् नाम, किन्तु सः आगतं याचकं दृष्ट्वा किञ्चित् वा ददाति एव। कदापि तस्य मुखतः- 'यदि धनं स्यात् तर्हि साहाय्यम् अकरिष्यम्' इति वचनं न बहिः आगच्छति। दुष्टानां मुखतः केवलम् एतादृशानि वचनानि आगच्छन्ति। मम तु सन्देहः- दामोदरः तादृशः एव कश्चन इति। यः निर्धनः सन् सहानुभूतिं प्रदर्शयति तत्र किं वैशिष्ट्यम्? योग्यतापरीक्षार्थं तस्मै धनं ददातु। तदा यदि सः दानशीलः भविष्यति तर्हि स्वर्गं प्रापयतु'' इति उक्तवान् नारदः।

यमराजः नारदस्य वचनं अङ्गीकृतवान्। स्वर्गसमीपे किङ्करैः नीयमानं दामोदरं स्वसमीपम् आनायितवान् च।

यमराजस्य अज्ञानुसारं यमकिङ्कराः दामोदरं भूलोकं नीतवन्तः। तत्र दामोदरः कृषिकजन्म प्राप्तवान्। यमराजस्य अनुग्रहेण कृषिकस्य तस्य जीवनं सुखेन प्रचलति स्म।

एवं स्थिते एकदा कष्टे पतितः कश्चित् दामोदरस्य गृहम् आगतवान्। 'किञ्चित् साहाय्यं करोतु" इति प्रार्थितवान् च।

तदा दामोदरः सहानुभूतिं प्रकटयन्- "अहं साधारणः कृषिकः अस्मि। कुटुम्बपोषणार्थम् यावत् आवश्यकं तावत् एव सम्पादयामि। यदि मम सम्पादनम् अधिकं स्यात्, अवश्यं साहाय्यम् अकरिष्यम्'' इति उक्तवान्।

नारदः यमराजं पृष्टवान्- ''तदीयं कपट-व्यवहारं पश्यन् अस्ति किल भवान्? केवलं वचसा सहानुभूतिः'' इति।

"सः एवं नीचः स्यात् इति अहं न चिन्तितवान् एव। अद्य एव तम् आनीय नरके

स्थापयामि'' इति उक्तवान् यमः।

''भवान् कथञ्चित् तं भूलोकं प्रेषितवान्। अतः इतोऽपि किञ्चित् परीक्षां करोतु। सः यत् इच्छति तत् ददातु। किं परिवर्तनं भविष्यति इति परिशील्यतु'' इति सूचितवान् नारदः।

एतदनन्तरं दामोदरः कृषिकार्येण विशेषफलसमृद्धिं प्राप्तवान्। अल्पे एव काले सः विशेषभवनं निर्मितवान्। अत्रान्तरे कश्चित् महादरिद्रः दामोदरस्य समीपम् आगत्य पृष्टवान्- ''अहं महाकष्टे पतितः। कृपया साहाय्यं करोतु'' इति।



दामोदरः सहानुभूतिपूर्वकम् उक्तवान्- ''भवान् असमये आगतवान् किल? गृहनिर्माणेन इदानीम् अहं रिक्तहस्तः। रिक्तहस्तः अहं किं वा साहाय्यं कर्तुं शक्नोमि?'' इति।

अनन्तरवर्षे फलसमृद्ध्या यत् धनं प्राप्तं तेन दामोदरः लघुवाणिज्यम् आरब्धवान्। अदृष्टकारणतः वाणिज्ये सः यशस्वी जातः। आयः दिने दिने वर्धते। अतः सः नगरे विशालं भवनं निर्माय विविधवाणिज्यम् आरब्धवान्। वाणिज्यक्षेत्रे तस्य नाम प्रसिद्धम् अभवत्।

एवं स्थिते आपदा ग्रस्तः कश्चित् दामोदरसमीपम् आगत्य प्राथितवान्- 'कृपया धनसाहाय्येन माम् अनुगृह्णातु' इति।

तदा दामोदरः उक्तवान्- ''भोः, वाणिज्यार्थ मया सद्यः एव भवनं निर्मितम्। तदर्थं महत् ऋणम् अपि कृतम्। महता प्रयत्नेन इदानीं ऋणमुक्तः अस्मि। मम पुत्राः नगरे विद्याभ्यासं कुर्वन्तः सन्ति। तेषां व्ययम् एव इदानीम् अहं सोढुं न शक्तः। किञ्चित्कालं वा अहं तृप्त्या जीवामि वा न वा? अतः इदानीं किमपि कर्तुं न शक्नोमि'' इति।

एतदनन्तरं दामोदरः वाणिज्येन अपारं धनं प्राप्तवान्। तेन सः चतस्रः नौकाः क्रीतवान्। एतद्द्वारा विदेशीयवाणिज्यम् अपि आरब्धवान्। तेन वाणिज्येन कोटयधीशः जातः। नगरे अद्वितीयः वणिक् इति कीर्तिं प्राप्तवान् च।

एषु एव दिनेषु कश्चित् निर्धनः तस्य गृहम् आगतवान्। दामोदरः तद्विषये अनादरं प्रकटयन् उक्तवान्- "पश्यतु भोः, अद्य मम बहूनि कार्याणि! समयावकाशः एव नास्ति। श्वः आगच्छति चेत् किमपि कर्तुं शक्नुयाम्'' इति। निर्धन आशाभावनया ततः निर्गतवान्।

अनन्तरदिने सः दरिद्रः उत्साहेन दामोदरस्य गृहम् आगतवान्। दामोदरः तं दृष्ट्वा कोपेन पृष्टवान्- ''कः भवान्? किं कार्यम् अत्र?'' इति।

निर्धनः आश्चर्यचकितः अभवत्। सः 'ह्यः मया आगतम् आसीत्' इति आरभ्य आत्मनः करुणकथां आदितः वक्तुं प्रवृत्तः।

दामोदरः तदीयं वचनं मध्ये स्थगयन् उक्तवान्- ''अये, मम समयावकाशः नास्ति एव। वाणिज्यनिमित्तम् अहम् इदानीं विदेशं प्रति प्रस्थितः। मासत्रयानन्तरं प्रत्यागमिष्यामि। तदा आगत्य मिलतु। अवश्यं साहाय्यं करिष्यामि'' इति।

सः निर्धनः दिनानि गणयन् मासत्रयं यापितवान्। अनन्तरं दामोदरस्य गृहं गतवान् च। किन्तु सः गृहस्य प्राकारं प्रवेष्टुम् अपि न शक्तवान्। यतः द्वारपालकाः प्रवेशावकाशं न दत्तवन्तः एव।

निर्धनः तु हठशीलः। सः रात्रिं तत्रैव उपविश्य यापितवान्। अपरस्मिन् दिने दामोदरः गृहात् प्रस्थितः। किन्तु तं परितः सन्दर्शकानां समूहः एव आसीत्। अतः निर्धनः तत्समीपं गन्तुम् अपि न शक्तवान्। दामोदरः सर्वेषां प्रश्नानाम् 'आम्, न' इति लघूनि उत्तराणि वदन् रथम् आरुह्य कुत्रापि गतवान्।

''मुनिवर्य! भवता सत्यम् एव उक्तम्। एषः मां वञ्चितवान्। एतत्क्षणे एव एतं घोरनरके पातयामि'' इति नारदम् उक्त्वा यमराजः स्वकिङ्करान् आहूतवान्।

यमकिङ्कराः दामोदरं बलात्कारेण आनीय घोरनरके स्थापितवन्तः।



# कांस्य-दुर्गम्



## -९-

[चन्द्रवर्मा कापालिकायाः आदेशानुसारं उत्तरदिशि प्रस्थितः। तस्य मार्गदर्शकरूपेण कालनागः आगतः। मार्गे कालनागस्य सूचनानुसारं चन्द्रवर्मा विचित्रवृक्षे स्थितं विचित्रफलं खादितवान्। तेन सः पशुपक्षिणां भाषां ज्ञातुं समर्थः अभवत्। अग्रे अग्निज्वालासहिता अग्निनदी प्राप्ता। नदीं तर्तुम् इच्छन् चन्द्रवर्मा महासर्पस्य उपरि धावितवान्। तदनन्तरं . . . ]

सर्पस्य शरीरं मसृणम् आसीत्। अतः पतनं यथा न भवेत् तथा जागरूकतया धावनीयम् आसीत् चन्द्रवर्मणा। अत्युष्णे जले पतितं चेत् मरणं सुनिश्चितम्। विलम्बस्य अपि एषः न कालः। सर्पः स्वपुच्छं पूर्ववत् यावत् न आकृष्यति ततः पूर्वं अपरतीरं प्राप्तव्यं किल ?

यदा नदीमध्यं गतं तदा चन्द्रवर्मा उष्णजलेन उत्पन्नेन बाष्पेण आवृत्तः अभवत्। श्वासोच्छ्वासार्थम् अपि सः कष्टम् अनुभूतवान्। दृष्टिः मन्दा जाता। वस्त्राणि अग्निना दह्यमानानि सन्ति वा इति सन्देहः अपि उत्पन्नः। वेगेन प्रवहन्त्याः नद्याः अत्युष्णाः जलकणाः तदा तदा शरीरस्य उपरि पतन्ति स्म। तेन चर्म दग्धं भवतिस्म च।

एवं स्थितेऽपि चन्द्रवर्मा धावनं न स्थगितवान्। सर्पस्य उपरि धावतः कपीन् अनुसृत्य एषः अपि धावति स्म।



अल्पे एव काले तापः न्यूनः जातः। 'तीरम् आगतं स्यात्' इति चिन्तितवान् चन्द्रवर्मा। हस्तेन नेत्रद्वयम् मार्जयन् 'तीरं प्राप्तम' इति निश्चित्य वेगेन उत्प्लुतवान् सः। 'देवः दयालुः' इति उद्गारं प्रकटितवान् च।

पृष्ठतः दृष्टिं प्रसारयन् नदीप्रवाहम् अग्निज्वालां सर्पस्य शरीरं च पुनः परिशीलितवान्। आत्मना कृतं साहसं स्मृत्वा आश्चर्यम् अनुभूतवान् च। आयासपरिहारार्थं सः समीपस्थवृक्षस्य अधः उपविष्टवान्।

महासर्पस्य शरीरम् इतोऽपि ततः न निर्गतम् आसीत्। आत्मनः उपरि धावतां कपीनां मानवस्य वा परिगणना एव न आसीत् सर्पस्य। चन्द्रवर्मा तस्य मुखस्य उपरि स्वदृष्टिं प्रसारितवान्। दशद्वादशहस्तमितम् आसीत् सर्पस्य मुखम्। अग्निगोलम् इव प्रज्वलति स्म तस्य नेत्रम्।

यदि एतस्य दृष्टिः मम उपरि पतेत् तर्हि एतत्क्षणे एव मम मरणं भवेत् इति चिन्तितवान् चन्द्रवर्मा। किन्तु तथा किमपि न जातम्। चन्द्रवर्माणम् अदृष्ट्वा एव सर्पः अग्रे अगच्छत्। वृक्षसमूहे कुत्रापि अदृश्यः अभवत् च। सर्पस्य मुखं दृष्टिपथात् अदृश्यतां गतं चेदपि शरीरं सशब्दम् अग्रे सरति स्म।

इतः परं सर्पस्य दृष्टिः मम उपरि न पतति इति निश्चित्य चन्द्रवर्मा उत्थितवान्। सर्पशरीरस्य समीपं गत्वा तत् शरीरं परीक्षितवान् च।

तत् शरीरं तैललिप्तम् इव मसृणं दृश्यते स्म। शरीरस्य उपरि दृढः कवचः अपि आसीत्। खड्गेन प्रहारः कृतः चेत् खड्गः शरीरे न प्रविशेत्, अपि तु स्वयं एव भग्नः भवेत्। तावत् कठिनम् आसीत् तत् शरीरम्।

साहसिकस्य तस्य मनसि जिज्ञासा उत्पन्ना- 'खड्गप्रहारं कृत्वा किमर्थं वा परीक्षा न करणीया?' इति। अतः सः कोषात् खड्गम् आकृष्य बलेन प्रहारं दत्तवान्। शिलाघर्षणेन इव 'ठन्' इति शब्दः आगतः, तावदेव। सर्पः प्रहारम् अविगणयन् स्वेच्छया अग्रे गच्छन् आसीत्।

आत्मनः निष्फलप्रयत्नं स्मृत्वा मनसि एव हसन् चन्द्रवर्मा खड्गं यथास्थानं स्थापितवान्। इदानीं बुभुक्षा स्मरणे आगता। परितः स्थितान् वृक्षान् परिशीलयन् सः उत्थितवान्। फलपूर्णं कञ्चित् वृक्षम् वेगेन आरूढवान् च। वृक्षे शाखयोः मध्ये सम्यक् उपविश्य रसम् आस्वादयन् मधुराणि फलानि एकैकशः खादितवान्।




अत्रान्तरे सः गजानाम् घीङ्कारं श्रुतवान्। अकस्मात् एषः ध्वनिः किमर्थम् उत्पन्नः इति सः न ज्ञातवान्। समीपे गजाः न दृष्टाः।

फलखादनं समाप्य चन्द्रवर्मा उद्गिरणं प्रकटीकुर्वन् पुनः परितः दृष्टिं प्रसारितवान्। स्वल्पे एव काले वृक्षाः लताः गुल्माः च तीव्रं कम्पमानाः तेन दृष्टाः। गजानां घीङ्कारध्वनिः अपि स्पष्टं श्रूयते स्म। वृक्षशाखानां भञ्जनेन उत्पन्नः 'लट्पट्' ध्वनिः अपि श्रुतः। गजाः कोपाविष्टाः सन्ति इति चिन्तितवान् चन्द्रवर्मा। निर्जने अरण्ये शान्तस्वभाववतां गजानां कोपस्य किं कारणं स्यात्?

चन्द्रवर्मणः कुतूहलः प्रवृद्धः। इदानीं सः विश्रान्तिं विस्मृत्य झटिति उत्थितवान्। शाखातः शाखां गच्छन् उपरि उपरि आरोहन् वृक्षस्य अन्तिमां शाखां प्राप्तवान्। पर्णानि अपसारयन् शब्दस्य दिशि दृष्टिं प्रसारितवान्।

अहो! भयानकं दृश्यम्! धैर्यवताम् अपि धैर्यनाशकं तत् दृश्यम् अतीव घोरम् आसीत्।

उष्णप्रवाहम् अतिक्रम्य आगतः सः महासर्पः कश्चित् गजं स्वशरीरेण आक्रम्य तस्य शिरः स्वमुखे स्थापयित्वा गिलन् आसीत्। प्राणापायपरिस्थितौ स्थितः सः गजः विमोचनं प्राप्तुम् इच्छन् शुण्डया सर्पं ताडयति स्म।

स्वसहजीविनः उपरि आगतं कष्टं दृष्ट्वा इतरे गजाः कुपिताः। कोपेन अन्धाः ते स्वेच्छप्रवर्तनम् आरब्धवन्तः। केचन धावन्ति। केचन घीङ्कारं कुर्वन्ति। अन्ये केचन निरुद्देशम् इतस्ततः धावन्तः वृक्षान् पातयन्ति। इतरे शुण्डया वृक्षशाखाः भञ्जयन्ति। एवं तत्प्रदेशः गजानां कोलाहलेन व्याप्तः अभवत्।

महासर्पः तु परितः प्रचलन्तं कोलाहलम्

अविगणयन् स्वप्रयत्ने निरतः आसीत्। यदा गजस्य आटोपः स्थगितः तदा सावधानतया गुहासदृशेन स्वमुखेन तं गजं गिलितुम् आरब्धवान्। पुनश्च किं वक्तव्यम्? पर्वताकारः गजः महासर्पस्य उदरं प्रविशन् अदृश्यतां गतः।

"अये जगदीश्वर! अपरिचिते घोरे अस्मिन् अरण्ये पदं स्थापितवान् अस्मि। अत्र प्रतिपदम् अपि अपायः दृश्यते। भवतः कृपा एव शरणम्" इति मनसा भगवन्तं प्रार्थितवान् चन्द्रवर्मा।

"एतस्य अरण्यस्य अपेक्षया कापालिनी यत्र वसति तत् अरण्यम् एव क्षेमकरम्। एतद्दृष्ट्या तद्वनं उद्यानायते। एतादृशे घोरारण्ये निवसता गच्छता च मया दूरे स्थितं शङ्खमान्त्रिकस्य गृहं प्राप्तव्यम् अस्ति। अल्पप्रयाणेन एव विलक्षणाः अनुभवाः मया प्राप्ताः। अमानुषशक्तिं विना एतादृशे प्रदेशे वसतिः प्रयाणं वा दुष्करम् एव। इदानीं मम समीपे विद्यमाना विशेषशक्तिः नाम पशु-पक्षिणां भाषायाः ज्ञानम्। किन्तु तेन अत्र किं साधयितुं शक्येत? सर्वथा अकिञ्चित्करं तत् अत्र" इति चिन्तितवान् चन्द्रवर्मा।

एवं समस्यायाः विविधमुखानि चिन्तयन् सः धैर्यच्युतः अभवत्। वृक्षात् अवतरणम् अपि विस्मृत्य सः शाखायाम् एव उपविष्टवान्। हस्तेन अन्यां शाखां दृढं गृहीत्वा नेत्रे निमीलितवान्।



पुनः मनसि विविधाः विकल्पाः- "एतत् कष्टकरं कार्यम् अहं सफलतया साधयितुं शक्नोमि वा? कापालिकां शङ्खमान्त्रिकं कालनागं च विस्मृत्य इतः पलायनं करोमि चेत् कथं भवेत्?"

पुनः मनसि अन्या आशङ्का- "इतः कुत्र वा गच्छामि अहम्? कस्यां दिशि किम् अस्ति इति न जानामि अपि। येन मार्गेण आगतं तत्र अग्निनदी प्रवहति। तस्याः तरणं तु दुस्साध्यम्। तर्हि कुत्र गमनम्? कुत्र....? कुत्र....?"

क्रमशः चन्द्रवर्मा निद्रायां लीनः अभवत्। दीर्घप्रयाणेन सः श्रान्तः आसीत् किल? अतः गाढनिद्रायां मग्नः चन्द्रवर्मा परितः किं प्रचलति इत्यपि न स्मरति स्म। सूर्यास्तमानं वा पक्षिणां प्रत्यागमनं वा सः न ज्ञातवान् एव।

मध्यरात्रे चन्द्रवर्मा अकस्मात् जागरितः अभवत्। यदा नेत्रे उद्घाटितवान् तदा सः वृक्षस्य उपरि न आसीत्। केनचित् झञ्झा-वातसदृशेन प्रचण्डवायुना सः नीयमानः आसीत्। कः वायुः? वायुना कुत्र नीयते? किमपि न ज्ञातवान् सः। "मम आयुः समाप्तम्। अपरिचितं लोकं नीयमानः अस्मि अहम्। अये भगवन्!" इति आत्मनि एव उद्गारं प्रकटितवान् सः।

एवं चन्द्रवर्मा यावत् चिन्तयन् आसीत् तावति काले सः कण्टकाकीर्णे प्रदेशे पतितः। कण्टकैः पीडितः अपि विशेषतया न व्रणितः।





"दैववशात् शिलायाः उपरि न पतितः, येन अहम् उज्जीवितः। इदानीम् अपि मम आयुः न समाप्तम्" इति चिन्तयन् सः ततः उत्थातुं प्रयत्नं कृतवान्। किन्तु अङ्गचालनं कर्तुम् अपि न शक्तवान्।

चन्द्रवर्मा परितः दृष्टिं प्रसारितवान्। तृणराशौ पतितवान् वा? इति भावना तस्य मनसि उत्पन्ना। नेत्रयोः पुरतः स्थिताः तृणाकाराः शलाकाः हस्तेन दूरीकृतवान् सः। अत्रान्तरे पक्षिणः कस्यचित् ध्वनिः श्रुतः- "आवाम् अद्य बहु अटितवन्तौ। अद्य अत्रैव विश्रान्तिसुखम् अनुभवावः। एषः परिसरः आनन्ददायकः अस्ति। अतः इदानीम् अन्यत्र गमनं मास्तु किल भेरुण्ड!" इति।

उत्तररूपेण 'तथैव अस्तु' इति अन्यपक्षिणः ध्वनिः श्रुतः।

'स्वयं कुत्र अस्मि' इति इदानीं ज्ञातवान् चन्द्रवर्मा। वस्तुतः प्रवृत्तं तु एवम्- भेरुण्ड-पक्षिणौ रात्रौ तत्र आगतौ। तयोः आगमन-समये उत्पन्नेन वायुना चन्द्रवर्मा नीतः। दैवम् अनुकूलकरम् इत्यतः सः शिलायाः उपरि न पतितः, अपि तु भेरुण्डपक्षिणः शरीरस्य उपरि पुच्छभागे पतितः।

गजसदृशस्य भेरुण्डस्य शरीरे स्थितः चन्द्रवर्मा मक्षिका इव मशकः इव च दृश्यते स्म। अतः चन्द्रवर्मणः स्थितिः तेन पक्षिणा न ज्ञाता एव। 'यावत् भेरुण्डः मां न पश्यति ततः पूर्वम् मया इतः धावनीयम्' इति चिन्तितवान् चन्द्रवर्मा।

अतः सः पुच्छमध्यतः मन्दं सरन् भूमिं प्राप्तुं प्रयत्नं कृतवान्। अत्रान्तरे आकाशे उज्ज्वलः प्रकाशः दृष्टः। चन्द्रवर्मा आकाशं दृष्टवान्। कान्त्या प्रकाशमानः तेजःपुञ्जः इव स्थितः कश्चित् पक्षी आकाशात् अवतीर्य तत्र एव आगतः।

तत्क्षणे चन्द्रवर्मा कापालिकया सूचितम् अग्निपक्षिणं स्मृतवान्। शङ्खमान्त्रिकस्य सहायकः अग्निपक्षी एषः एव स्यात् वा? इति संशयः तस्य मनसि उत्पन्नः। बहिर्गमन-विचारं त्यक्त्वा चन्द्रवर्मा तत्रैव स्थितवान्।

अग्निपक्षिणः आगमनं दृष्ट्वा भेरुण्डौ क्रियाशीलौ जातौ। चञ्चूम् उन्नीय स्वागतं वदन्तौ पृष्टवन्तौ- "भो मित्र! चिरात् दर्शनम्। अत्र आगमनस्य किं कारणम्?" इति।

अग्निपक्षी भूमौ अवतीर्य अवदत्- "भवन्तौ अत्र स्तः! बहोः कालतः भवतोः अन्वेषणं कुर्वन् आसम् अहम्" इति।

"आवयोः अन्वेषणं किमर्थम्? किमपि कार्यगौरवम् आसीत् वा?" इति पृष्टवन्तौ तौ भेरुण्डौ।

अग्निपक्षी चञ्च्वा पक्षं स्वच्छीकुर्वन् अवदत्- "वार्धक्येन कृशा काचित् कापालिका आनेतव्या इति स्वामिना आदेशः दत्तः। किन्तु अहम् एतत्कार्यं कर्तुं न शक्नोमि। यतः दिने अहं किमपि द्रष्टुं न शक्नोमि किल? यदि रात्रौ गच्छेयम् तर्हि मम कान्त्या एव मां ज्ञात्वा कापालिका जागरूका भविष्यति। प्रत्युपायं चिन्तयिष्यति अपि। अतः अद्य रात्रौ एव गत्वा तां कापालिकां चञ्च्वा गृहीत्वा आनीतं चेत् अहम् आजन्म कृतज्ञः भविष्यामि। एषः उपकारः कर्तुं शक्यते किल? भवतोः तु एतत् अतीव सुकरम्" इति अवदत् अग्निपक्षी।

तदा भेरुण्डपक्षिणौ दीर्घं निःश्वसन्तौ उक्तवन्तौ- "हन्त! अस्यां रात्रौ आवां कुत्रापि गन्तुं न शक्नुवः। सूर्यास्तपर्यन्तम्




अपि द्वीपद्वीपान्तरेषु अटित्वा आहारं सम्पाद्य इदानीं श्रान्तिपरिहारार्थम् अत्र उपविष्टौ। उष्णवायोः सुखम् अनुभवन्तौ आवां इदानीं प्रथमं विश्रान्तिम् इच्छावः। श्वः चेत् भवदुक्तं कार्यं कर्तुम् आवां सिद्धौ। एतत् कार्यं श्वः कृतं चेत् भवतः यजमानस्य किं नश्यति?" इति।

"एकस्य दिनस्य विलम्बेन हानिः काऽपि नास्ति। किन्तु तस्याः कापालिकायाः ग्रहणार्थं रात्रौ एव गन्तव्यम्। सा तन्त्रे अतिनिपुणा, महाबुद्धिमती च। तस्याः बलशालिनः सहायकाः अपि सन्ति। बहोः कालतः सा रात्रौ अपि निद्रां त्यक्त्वा जागरूका एव तिष्ठति। किन्तु एषु दिनेषु सा वार्धक्यकारणतः अस्वस्था।

अतः भवद्भ्यां रात्रौ सुसमयं दृष्ट्वा अकस्मात् गत्वा आक्रमणं करणीयम् । चञ्च्वा गले ग्रहीतव्यम्। तदा सा मन्त्रोच्चारणं कर्तुम् अपि न शक्ष्यति। एतेन भवतोः काऽपि हानिः न भविष्यति। तां ततः उन्नीय शङ्खमान्त्रिक-गृहम् आनयन्तु" इति असूचयत् अग्निपक्षी ।

"अवश्यम् एतत् कार्यं करिष्यावः" इति सन्तोषपूर्वकम् उक्तवन्तौ भेरुण्डौ।

'तर्हि मम कार्यं सिद्धम् इव' इति वदन् अग्निपक्षी आनन्दातिरेकेण सर्वत्र सञ्चरन् नृत्यम् अकरोत्। यदा आवेगः किञ्चित् न्यूनं जातः तदा पुनः अवदत्- "यदि भवन्तौ तां मान्त्रिकसमीपम् आनेष्यन्ति तर्हि अस्माकं स्वामी योग्यं पारितोषिकं दास्यति" इति।

"पारितोषिकस्य अभिलाषा एव नास्ति आवयोः। इच्छामात्रेण यदि आवां सर्वद्वीपेषु सञ्चारं कर्तुं शक्ताः स्याव तर्हि महान् उपकारः कृतः भवेत्" इति अवदत् तयोः एकः भेरुण्डः।

"मूर्खौ पक्षिणौ एतौ। प्रत्युपकाररूपेण मान्त्रिकः वरं ददाति इति विश्वसितवन्तौ। प्रायः मान्त्रिकम् एतौ न जानीतः" इति चिन्तयन् चन्द्रवर्मा मनसि एव हसितवान्।

अग्निपक्षी शिरश्चालनपूर्वकम् अङ्गीकारं प्रदर्शयन् अवदत्- "अस्तु, श्वः सायङ्कालतः पूर्वं भवन्तौ मम वसतिम् आगच्छताम्। तदा यदि शक्यम्, अहं मान्त्रिकाय भवतोः परिचयं कारयामि" इति।

भेरुण्डपक्षिणौ एतत् अङ्गीकृतवन्तौ। कृतकृत्यभावेन तृप्तः अग्निपक्षी भेरुण्डयोः अनुमतिं प्राप्य वेगेन आकाशे उड्डयनम् अकरोत्। 'एषा एव उत्तरदिक्' इति चिन्तितवान् चन्द्रवर्मा।

भेरुण्डपक्षिणौ किञ्चित्कालं वार्तालापे मग्नौ आस्ताम्। अनन्तरं तौ उष्णवायोः हितस्पर्शम् अनुभवन्तौ निश्चलीभूय तथैव निद्रावस्थां प्राप्तवन्तौ।

(अनुवर्तते)






# शापरहस्यम्

वेतालवहनेन अभ्यस्तः इव राजा त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं वृक्षतः अवतार्य स्वस्कन्धे आरोपितवान्। मौनं श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः अवदत्- "अये राजन्! भीतिजनके श्मशाने, भयङ्करे अस्मिन् अर्धरात्रे, भवान् यत् कष्टम् अनुभवति तत्र कारणं कस्यचित् शापः एव इति मन्ये। प्रायः भवान् पूर्वं कदाचित् सत्त्वशालिनं योगीश्वरं पीडयित्वा घोरशापं प्राप्तवान् स्यात्। उद्देश-पूर्वकं भवान् तथा न कृतवान् स्यात्। कदाचित् अज्ञाततया एव काश्चन अहितघटनाः सम्भवन्ति। रत्नपालः नाम वणिक् अज्ञाततया सामान्यस्य शापं यत् प्राप्तवान् तां कथां स्मरामि अहम्। मार्गायासपरिहारार्थं तां कथां श्रावयामि। सन्तोषेण श्रृणोतु" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



"पूर्वं रत्नपालः नाम वणिक् आसीत्। तस्य सकलसमृद्धिः आसीत्। किन्तु सन्तान-भाग्यं न आसीत्। एतदर्थं सः बहुविधप्रयत्नान् कृतवान्। तथापि किमपि प्रयोजनं न सिद्धम्।

एवं स्थिते कदाचित् रत्नपालः काञ्चित् वार्ता श्रुतवान्- "नैमिषारण्ये स्थितः भुवनेन्द्र-महर्षिः सन्तानप्राप्त्यर्थम् औषधं ददाति" इति। 'एतत् औषधं प्राप्तव्यम्' इति उद्देशेन रत्नपालः नैमिषारण्यं प्रति प्रस्थितः।

सप्ताश्वयुते रथे उपविश्य रत्नपालः सप्तदिनं यावत् प्रयाणं कृत्वा अष्टमे दिने नैमिषारण्यस्य पार्श्वस्थं ग्रामं प्राप्तवान्।

महाधनिकः कश्चित् आगतः इति कारणेन ग्रामीणाः सर्वे सन्तुष्टाः। ते उत्साहेन तस्य वसतिव्यवस्थाम् उपकल्पितवन्तः। ग्रामे रत्नपालस्य आगमनकारणं ज्ञात्वा कश्चित् वृद्धः उक्तवान्- "पुत्र! भुवनेन्द्रमहर्षिणाम् अनुग्रहेण भवतः इष्टार्थं सिध्यति एव। आश्रमगमन-समये भवता एकाकिना पादचारिणा गन्तव्यम्। आढ्यताप्रदर्शनं स्वामिनः न सहन्ते" इति।

रत्नपालः वृद्धस्य वचनम् अङ्गीकृत्य पादाभ्याम् एव महर्षेः आश्रमं प्रति प्रस्थितः। किन्तु अनभ्यासवशात् सः बहुदूरं यावत् गन्तुं न शक्तवान्। तथापि महता प्रयासेन अग्रे गतवान्। कथञ्चित् आश्रमस्य समीपं गतवान्। किन्तु तावता एव असह्यया श्रान्त्या पीडितः सः तत्रैव पतितवान्।

तत्समये गोपालः नाम आश्रमस्य परि-चारकः तत्र आगतवान्। श्रान्त्या पतितं रत्नपालं दृष्ट्वा धावन् समीपं गतवान् सः।

रत्नपालः गोपालं दृष्ट्वा कातरस्वरेण उक्तवान्- "अये बालक! मम पादयोः महती वेदना। किञ्चित् पादमर्दनं करोति वा?" इति।

"निश्चयेन करोमि। किन्तु अहं यावत् भवतः पादमर्दनं करोमि ततोऽपि द्विगुणित-कालं यावत् भवता मम पादमर्दनं करणीयम्" इति उक्तवान् गोपालः।

'कश्चित् कर्मकरः मम समीपे एवं व्यवहरति किल' इति रत्नपालः कुपितः। अतः सः कोपेन उक्तवान्- "अये, ज्येष्ठ-कनिष्ठ-



तारतम्यम् एव न जानाति वा भवान् ? वयसा धनेन योग्यतया च ज्येष्ठं माम् आत्मनः सेवार्थम् आदिशति किल ?" इति ।

"भवतः एकः पुत्रः यदि स्यात् सः यदि मम समवयस्कः अपि भवेत् तर्हि भवान् तस्य सेवाम् अकरिष्यत् वा न वा ? यदि प्रीतिः अस्ति तर्हि कोऽपि सेवासन्दर्भे ज्येष्ठकनिष्ठतां न गणयति । एतत् भवान् अपि जानाति एव" इति उक्तवान् गोपालः ।

एतेन रत्नपालस्य कोपः प्रवृद्धः । "जनिष्यमाणस्य मम पुत्रस्य भवतः च किं साम्यम् ? कोटीश्वरस्य मम पुत्रः क्व ? आश्रमे सामान्यपरिचारकः भवान् क्व ?" इति उपहासभावेन पृष्टवान् सः ।

तदा गोपालः हसन् "इदानीं भवान् धनमदेन उन्मत्तः अस्ति । धनं यावत् अपि भवेत् । तथापि भिक्षुकः इव आश्रमम् आगत्य अपि अहङ्कारबुद्धिं न त्यक्तवान् । अस्तु नाम, इतः परं जनिष्यमाणः भवतः पुत्रः सेवकः सन् ममापेक्षया हीनं स्थानं प्राप्स्यति । तदानीं भवान् विवेकं प्राप्नुयात्" इति उक्त्वा ततः गतवान् ।

रत्नपालः गोपालस्य वचनं निर्लक्षितवान् । किञ्चित्कालं तत्रैव उपविश्य आयासं परिहृत्य मन्दं गच्छन् आश्रमं प्रविष्टवान् ।

तत्समये भुवनेन्द्रमहर्षिः तत्र आगतवान् । तदा रत्नपालः आत्मनः आगमनकारणं निवेदितवान् । 'महत्कष्टम् अनुभूतवान् किल ! आगच्छतु' इति वदन् महर्षिः तम् आश्रमस्य अन्तः नीतवान् । योग्येन आतिथ्येन सत्कृतवान् च ।

भुवनेन्द्रमहर्षेः दयागुणं स्मरन् रत्नपालः "श्रीमन् ! उत्तमानाम् अधमानाञ्च मध्ये कीदृशः भेदः ! भवन्तः तु अतीव आत्मीयतया व्यवहरन्ति । किन्तु भवतां परिचारकः गोपालः तु महामूर्खः विवेकहीनः च । ज्येष्ठकनिष्ठयोः तारतम्यभावम् अपि न जानाति" इति वदन् पूर्वं प्रवृत्तं सर्वं निवेदितवान् ।

तदा महर्षिः उक्तवान् "प्रवृत्तस्य विषये चिन्तनेन किं प्रयोजनम् ? मया दीयमानेन औषधेन भवान् पुत्रं प्राप्स्यति । किन्तु



गोपालस्य शापानुसारं सः पुत्रः सेवकवृत्त्या तुच्छजीवनं यापयिष्यति'' इति ।

रत्नपालः आतङ्कं प्रकटयन् उक्तवान्- ''महात्मन्! गोपालस्य व्यवहारः औचित्यपूर्णः न आसीत् । एवं स्थिते तस्य शापः मां बाधते इत्येतत् अनुचितं किल ! अतः भवद्भिः शापपरिहारार्थम् उपायः सूचनीयः'' इति ।

''गोपालेन अनुचितं किम् उक्तम् ? अनागरिकता का प्रदर्शिता ? सेवायाः प्रतिफल-रूपेण प्रतिसेवां पृष्टवान् । 'तदा ज्येष्ठैः कनिष्ठानां सेवा न करणीया' इति उक्तवान् भवान् । तत् अनुचितं किल ? अद्यपर्यन्तं ज्येष्ठाः एव किल भवतः सेवां कृतवन्तः ? एतदेव सूचितवान् सः । किन्तु भवान् एतत् तिरस्कुर्वन् धनमदेन तं निन्दितवान् । अतः एव सः शापं दत्तवान् । आश्रमवासिनां मुखतः निरर्थकानि वचनानि न निस्सरन्ति'' इति उक्तवान् भुवनेन्द्रमहर्षिः ।

एतत् निराकर्तुम् अशक्तः रत्नपालः प्रार्थितवान्- ''अस्तु श्रीमन् ! दोषः मदीयः इति अहम अङ्गीकरोमि । पादेन अहम् अधिकं सञ्चारं कर्तुं न शक्नोमि । श्रान्ति-कारणतः मया किमपि उक्तं स्यात् । एतेन अहम् 'अहङ्कारी' इति भवद्भिः न निर्णतव्यम् । कृपया गोपालस्य शापात् विमुक्तिः यथा स्यात् तथा अनुग्रहः करणीयः'' इति ।

''भवान् स्वभावेन उत्तमः एव । उत्तमान् शापाः न तथा बाधन्ते । भवतः योग्यता एव भवन्तं रक्षति'' इति सान्त्वयन् महर्षिः रत्नपालाय औषधं दत्त्वा उक्तवान्- ''एतम् औषधम् भवतः पत्नी स्वीकरोतु । औषधस्य प्रभावेण भवतः पुत्रः उत्पद्यते । तत्समये भवतः दासीषु अपि काचित् पुत्रं प्रसूते । तत्सन्दर्भे भवतः पुत्रः दासीसमीपं, दासीपुत्रः भवतः पत्न्याः समीपं च प्राप्नोति । अनन्तरं सा दासी अदृश्या भविष्यति । कालान्तरे कदा-चित् गोपालः भवतः ग्रामम् आगमिष्यामि । तस्य अनुग्रहेण भवान् भवतः पुत्रं पुनः प्राप्स्यति । पुत्रप्राप्तौ इतोऽपि सुलभः मार्गः नास्ति एव'' इति ।



# निधिरहस्यम्

कोसलदेशस्य राजा सूर्यसेनः। सः यदा सप्ततिवर्षीयः जातः, तदा वार्धक्यसहजेन दौर्बल्येन अनारोग्येण च पीडितः अभवत्। एतेन सः पूर्ववत् राज्यकार्याणि निर्वोढुम् असमर्थः अभवत्। तेन राज्यस्य परिस्थितिः अव्यवस्थिता जाता।

एतस्यां परिस्थितौ प्रजासु अन्तर्गताः दुर्गुणाः दुष्टशक्तयः च अङ्कुरिताः, क्रमेण प्रवृद्धाः च। देशे तत्र तत्र अराजकता दृश्यते स्म। चौर्यं, मार्गलुण्ठनादयः नित्यविषयाः। बहुदिनेभ्यः कोसलदेशं स्वाधीनीकर्तुम् अवकाशं प्रतीक्षमाणस्य विदेशराजस्य इदानीम् अत्यानन्दः जातः।

अद्यावधि सूर्यसेनस्य पुत्रः चतुरसेनः विद्याभ्यासार्थं दूरदेशे वसति स्म। सः इदानीम् अध्ययनं समाप्य स्वदेशम् आगतवान्। सः प्रौढः शूरः च आसीत्। तादृशं युवराजं दृष्ट्वा प्रजाः सन्तुष्टाः। प्रधानसचिवः महाराजस्य समीपं गत्वा "सद्यः एव युवराजपट्टाभिषेकं कृत्वा राज्यस्य शासनदायित्वं युवराजपुत्राय अर्पयतु" इति सूचितवान्।

एषा सूचना अनुचिता इति सूर्यसेनस्य अभिप्रायः। अद्यावधि दूरदेशे वसन् राजकुमारः मुग्धः अनुभवहीनः च। तस्य हस्ते सहसा राज्यस्य प्रदानेन महती विपत्तिः आपतेत् इति महाराजस्य भीतिः। अतः पट्टाभिषेकतः पूर्वं पुत्रस्य परीक्षा करणीया। तस्य विवेकः कीदृशः, लोकज्ञानं कीदृशम् इति ज्ञानानन्तरं पट्टाभिषेकः भवतु इति सः निर्णीतवान्।

अनन्तरं सूर्यसेनः पुत्रम् आहूय देशस्य समग्रां परिस्थितिं निवेद्य 'इदानीम् उचितः मार्गः कः ?" इति पृष्टवान्।

चतुरसेनः किञ्चित् आलोच्य "प्रथमं

"श्रीमाता"



ते तात्कालिकरूपेण प्रजानां क्लेशकारकाः विषयाः इति तु सत्यम्। किन्तु एतादृश-चौर्यादिभिः अपहृताः सम्पत्तयः अस्माकं देशतः बहिः नैव गच्छन्ति। यदा ते दुष्टाः बन्धिताः भवन्ति, तदा तेषां सम्पूर्णसम्पत्तीः स्वाधीनीकृत्य, चौर्यादिभिः पीडितेभ्यः जनेभ्यः प्रत्यर्पयितुं शक्यते। अतः तद्विषये तावती चिन्ता नास्ति'' इनि उक्तवान्।

''एवं तर्हि बाह्यशत्रुभ्यः एव अधिकः अपायः भवति इति भवतः अभिप्रायः। सत्यं खलु ?'' इति सूर्यसेनः पृष्टवान्।

''आम, अस्माभिः इदानीं शीघ्रं रक्षणा-व्यवस्था करणीया। गूढचारैः सूचितया वार्तया बाह्यः अपायः अस्ति इति ज्ञातं किल ? विदेहराजेन सह युद्धे यदि अस्माकं पराजयः भवेत्, तर्हि तस्य सैनिकाः अस्माकं प्रजानां समस्तसम्पत्तीः अपहरिष्यन्ति। अस्माकं सिंहासनम् अपि शत्रोः अधीनं भविष्यति। तदर्थम् अस्माभिः बहु जागरूकैः भवितव्यम्'' इति उक्तवान् चतुरसेनः।

पुत्रस्य अभिप्रायं श्रुत्वा सूर्यसेनः दुर्गस्य भित्तीनां दृढीकरणकार्यस्य आयोजनार्थं कोशाधिकारिणं समाहूतवान्। यदा सः अधिकारिणा सह व्ययविचारम् आलोचितवान्, तदा तदर्थं पर्याप्तं धनं कोशागारे नास्ति इति ज्ञातम्। यत् किमपि वा कार्यं भवतु, धनं

दुर्गस्य भित्तयः दृढीकरणीयाः। यः भागः शिथिलः अस्ति, सः दृढं समीकरणीयः। किञ्च अस्माकं सैनिकाः आयुधैः सज्जीभूय तिष्ठेयुः। एतत् कार्यद्वयं सद्यः एव करणीयम्'' इति उक्तवान्।

''तत्तु समीचीनं भोः। किन्तु अस्माकं देशस्य अन्तः एव स्थित्वा ये चौर्यं लुण्ठनं च कुर्वन्ति, अराजकतां च उत्पादयन्ति, तेषां विषयं चिन्तितवान् वा ? बाह्यशत्रूणाम् अपेक्षया एतैः अन्तः स्थितैः शत्रुभिः अधिकः अपायः भवति खलु ?'' इति पृष्टवान् सूर्यसेनः।

तत् वचनं श्रुत्वा चतुरसेनः ''तात, देशस्य अन्तर्भागे ये चौर्यलुण्ठनादयः सम्भवन्ति



खलु प्रधानम् ? कोशागारं रिक्तं नाम महान् अपायः एव । इदानीं किं करणीयम् ? वृद्धराजः तीव्ररूपेण चिन्तामग्नः जातः । एतस्मिन् सन्दर्भे सेनानायकः गुप्तचरद्वयेन सह सूर्यसेनस्य समीपम् आगत्य 'महाप्रभो, अस्माकं गुप्तचर-द्वारा एका नूतनवार्ता ज्ञाता अस्ति । इदानीं द्वित्रदिनेभ्यः एकः साधुपुङ्गवः अस्माकं नगरं समागतवान् अस्ति । सः अद्भुतमहिमा-वान् । तस्य दर्शनार्थं ये गच्छन्ति, तेषां पूर्वजैः रक्षितानां निधीनां विचारं सः वदति । अद्यावधि अनेके जनाः लाभं प्राप्तवन्तः । भवान् अपि तस्य साधोः दर्शनार्थं गच्छति चेत्, प्रयोजनं भवेत् इति विज्ञापयितुम् अहम् आगतवान्'' इति उक्तवान् ।

सेनानायकस्य राजभक्तिः, सामर्थ्यम् इत्या-दिषु वृद्धराजस्य महान् विश्वासः आसीत् । अतः सः सद्यः एव साधोः समीपं गत्वा, स्वीयां समस्यां उक्तवान् ।

साधुः नेत्रे निमील्य किञ्चित् अनन्तरं पुनः उन्मील्य- ''भोः महाराजः, अहं योग-दृष्ट्या सर्वं परिशीलितवान् । इदानीं कस्मात् अपि महाराजतः भवतः राज्यस्य अपायः नास्ति । किन्तु एकः विशेषविचारः अस्ति । भवतः पूर्वजैः दुर्गस्य महाद्वारस्य उभयपार्श्वयोः भूमौ निधिपूर्णाः शतं कलशाः निक्षिप्ताः सन्ति । ते कलशाः सुवर्णमयाः सन्ति । तत्र खननं कारयित्वा तान् कलशान् प्राप्नोति चेत्, भवतः धनसमस्यायाः परिहारः भवि-ष्यति'' इति उक्तवान् ।

तदा राजा सन्तृप्तः सन्, साधुं भक्ति-पूर्वकं नमस्कृत्य स्वीयभवनं प्रत्यागतवान् ।

साधुवचने जनकस्य तृप्तिं विश्वासं च दृष्ट्वा युवराजस्य आश्चर्यम् उत्पन्नम् । ''अस्तु, साधोः वचनं कदाचित् सत्यम् एव स्यात् । तथापि इदानीं शत्रुराजस्य आक्रमणभयम् अस्ति । एतस्याम् अपायपरिस्थितौ दुर्गस्य भित्तीनां खननं तु अनुचितम् एव । निधिः अस्ति इति साधुना निर्दिष्टे दुर्गभागे भित्तिषु किञ्चित् अपि शैथिल्यं नास्ति । सः भागः अन्यस्थानापेक्षया दृढतमः अस्ति । अस्माकं



राज्ये दुर्गस्य भित्तिमूलं त्यक्त्वा अन्यत्र कुत्रापि धनं नास्ति वा ? प्रथमं तस्य साधोः महात्म्यं कीदृशम् इति परीक्षां कर्तुं षण्णां दिनानाम् अवकाशं मह्यं ददातु'' इति पृष्टवान् चतुरसेनः ।

'तथास्तु' इति सूर्यसेनः अनुमतिं दत्तवान् । अनन्तरं युवराजः आस्थानविदूषकेण सह रहस्यरूपेण समालोच्य, तस्य गृहस्य पृष्ठतः पूर्वभागीयभूमिं खानयित्वा तत्र सहस्रसुवर्णदीनारान् निक्षिप्तवान् । अनन्तरं विदूषकः तस्य साधोः समीपं गत्वा, साष्टाङ्गनमस्कारं कृत्वा 'महास्वामिन्! भाग्यहीनः अहं बहुदरिद्रः। मम इदानीं धनस्य अत्यावश्यकता अस्ति । यथाकथञ्चित् - सहस्रदीनाराः सन्ति चेत् कष्टपरिहारः भवेत् । भवतः अनुग्रहात् अनेके जनाः स्वीयगृहपरिसरेषु एव स्वपूर्वजैः स्थितानि धनानि लब्धवन्तः । मम पूर्वजैः अपि तथा यत्किञ्चित् निक्षिप्तम् अस्ति वा इति परीक्ष्य वदन्तु'' इति दीनभावेन प्रार्थितवान् ।

तदा साधुः नेत्रे निमील्य किञ्चित्कालं तूष्णीं स्थित्वा ''भोः तं विषयं योगदृष्ट्या परिशीलयितुं योग्यः मुहूर्तः अद्य अतीतः । अतः भवान् श्वः प्रातः आगच्छतु । भवतः गृहपरिसरे निधिः अस्ति वा न वा इति वदामि'' इति उक्तवान् ।

युवराजः चतुरसेनः तस्यां रात्रौ रहस्यरूपेण विदूषकस्य गृहं गतवान् । तत्र अर्धरात्रानन्तरं द्वौ पुरुषौ गृहस्य पृष्ठभागीयभित्तिम् आरुह्य गृहं प्रविष्टवन्तौ । विदूषकः युवराजः च तौ पुरुषौ दृष्ट्वा तौ कौ इत्यपि स्मृतवन्तौ । पूर्वं सेनानायकेन सह महाराजस्य समीपम् आगतौ गूढचारौ एव तौ ।

तौ द्वौ अपि गृहस्य पृष्ठतः पश्चिमभागे स्थितस्य आम्रवृक्षस्य अधोभागे किञ्चित् खनित्वा एकं गर्तं कृतवन्तौ । तस्मिन् गर्ते किमपि निक्षिप्य अनन्तरं भूमिं पूर्ववत् समीकृत्य ततः निर्गतवन्तौ ।

तयोः निर्गमनानन्तरं युवराजः विदूषकः च तत्र गत्वा परीक्षितवन्तौ । एकस्मिन् ताम्रकलशे सहस्रदीनाराः आसन् । दृष्ट्वा तं

तत्रैव भूमौ पुनः स्थापितवन्तौ।

परेद्युः प्रातः विदूषकः साधोः समीपं गतवान्। साधुः तं दृष्ट्वा "भोः भवतः गृहस्य पृष्टभागे पश्चिमपार्श्वे वर्तमानस्य आम्रवृक्षस्य मूले सः निधिः अस्ति। तं निधिं गृहीत्वा भवतः कष्टस्य परिहारं प्राप्नोतु" इति उक्तवान्।

विदूषकः राजभवनं प्रत्यागत्य साधुना कथितं विचारं युवराजम् उक्तवान्। अनन्तरं युवराजः विदूषकेण सह महाराजस्य समीपं गत्वा जातं वृत्तान्तं कथयित्वा "तात, यदि सः साधुः महिमावान् स्यात् तर्हि न्यूनातिन्यूनं अस्माभिः निक्षिप्तस्य धनस्य विचारं वक्तुं शक्तः अभविष्यत्। किन्तु सः केवलम् आत्मना निक्षिप्तं धनम् एव सूचितवान्। सः नूनं शत्रोः गूढचारः एव। तत्र संशयः नास्ति एव। अस्माकं सेनापतिः, केचन गूढचाराः च सम्भूय निधीनां व्याजेन जनान् वञ्चयन्तः सन्ति। अस्माकं दुर्गस्य सुदृढं महाद्वारं निधि-व्याजेन शिथिलीकर्तुं शत्रवः प्रयत्नं कुर्वन्तः सन्ति" इति उक्तवान्।

एतत् श्रुत्वा सेनानायकस्य विषये सूर्यसेन-महाराजस्य मनसि किञ्चित् संशयः उत्पन्नः। तथापि तस्य बन्धनार्थं सहसा आज्ञां दातुम् अनिच्छन्, युवराजं "सः साधुवेषधारी गूढचारः स्वीयमिथ्यामहिमप्रदर्शनेन यथा



अस्माकं नगरस्य अनेकजनान् वञ्चितवान्, तथा सेनानायकम् अपि वञ्चितवान् स्यात्। सहसा तस्य उपरि राजद्रोहम् आरोपयितुं मम मनः न इच्छति भोः" इति उक्तवान्।

"एवं तर्हि वयम् एवं कुर्मः। अद्य रात्रौ वयं वेषपरिवर्तनं कृत्वा तस्य साधोः निवास-स्थानं गमिष्यामः। तत्र ये ये आगच्छन्ति, तेषु अस्माकं गूढचाराः सन्ति चेत्, तान् बद्ध्वा आनयामः। अनन्तरं तेषां द्वारा वस्तुस्थितिं ज्ञातुं शक्नुमः" इति उक्तवान् युवराजः।

महाराजः अङ्गीकृतवान्। सः युवराजः च भिन्नभिन्नवेषं धृत्वा साधोः गृहं गतवन्तौ। तौ अनेकसैनिकान् अपि नीतवन्तौ। ते

सैनिकाः दूरे एव गुप्तरूपेण स्थितवन्तः। पितापुत्रौ साधोः गृहस्य वातायनस्य पार्श्वे स्थितवन्तौ।

किञ्चित्कालानन्तरं सेनानायकः अनुचरैः सह तत्र आगतवान्। तं दृष्ट्वा साधुः "अस्माकं योगदृष्टिविषये महाराजस्य सम्पूर्णविश्वासः जातः खलु?" इति पृष्टवान्।

"आम्, सम्पूर्णविश्वासः जातः अस्ति। अत्र संशयः मास्तु। विदूषकस्य गृहे निधिः लब्धः खलु? तेन अन्येषां अधिकारीजनानाम् अपि भवद्विषये महान् विश्वासः जातः। श्वः वा परश्वः वा महाराजः निधिप्राप्त्यर्थं दुर्गस्य महाद्वारभागं खानयिष्यति" इति उक्तवान् सेनानायकः।

सेनानायकस्य वचनश्रवणसमनन्तरं एव राजा युवराजः च सैनिकैः सह गृहं प्रविष्टवन्तौ। सैनिकाः धावन्तः गत्वा साधुं सेनापतिं अनुचरान् च बद्ध्वा नीतवन्तः। अनन्तरं ते सर्वे कारागारे स्थापिताः।

राजा युवराजः च ततः राजभवनं प्रत्यागतवन्तौ। अनन्तरं राजा सचिवं समाहूय "भोः महासचिव, भवत्सूचनानुसारं मया पूर्वमेव युवराजपट्टाभिषेकः करणीयः आसीत्। एते दुष्टाः निधिव्याजेन अस्मासु भ्रमम् उत्पाद्य दुर्गस्य भित्तिं शिथिलीकृत्य अपातयिष्यन्। तदा अस्माभिः एव विदेहराजस्य स्वागतं कृतमिव अभविष्यत्। अस्माकं भाग्यवशात् अपायः अपगतः। इदानीं शीघ्रमेव युवराजस्य पट्टाभिषेकोत्सवम् आयोजयतु" इति उक्तवान्।

अनन्तरं सप्ताहाभ्यन्तरे एव युवराजस्य चतुरसेनस्य पट्टाभिषेकोत्सवः सम्पन्नः। यदा सः राजा अभवत् तदा पूर्वविचारान् सम्यक् विचार्य गूढचारशाखां स्वाधीनां कृतवान्।

स्वीयतन्त्रस्य भङ्गेन विदेहराजः हताशः जातः। सः युद्धप्रयत्नं त्यक्तवान्।

स्वपुत्रस्य शक्तिसामर्थ्यादीनां साक्षात् दर्शनेन वृद्धराजः निश्चिन्तः भूत्वा विश्रान्तिसुखम् अनुभवन् कालं यापितवान्।






# सुवर्णमयूरः

यदा ब्रह्मदत्तः काशीं परिपालयन् आसीत् तदा बोधिसत्त्वः काशीराज्ये मयूररूपेण जन्म प्राप्तवान्। सः मयूरः असाधारणः आसीत्। तस्य शरीरं सुवर्णवर्णेन प्रकाशते स्म। काशीराज्ये जातः सः दण्डकारण्ये निवसति स्म।

कदाचित् काशीराजस्य कयाचित् पत्न्या स्वप्ने एषः स्वर्णमयूरः दृष्टः। सा स्वप्नवार्तां पतिं निवेद्य तं मयूरम् आनयतु इति सूचितवती। राजा एतदर्थं मन्त्रिणः निवेदितवान्। मन्त्रिणः उक्तवन्तः- 'ब्राह्मणाः एतद्विषये प्रष्टव्याः'। ब्राह्मणाः उक्तवन्तः- 'एतं मयूरं व्याधाः जानीयुः, न वयम्' इति।

अन्ते राजा कश्चित् व्याधम् आहूय उक्तवान्- "दण्डकारण्ये निवसन्तं मयूरं आनयति चेत् अमूल्यं पारितोषिकं दास्यामि" इति। व्याधः एतत् अङ्गीकृतवान्। अनन्तरं सः सप्तवर्षाणि यावत् एतदर्थं प्रयत्नं कृतवान्। किन्तु मयूरः व्याधस्य जाले न पतितः एव। कालान्तरे व्याधः मरणं गतः। महाराज्ञी अपि दिवङ्गता।

"स्वप्ने दृष्टं मयूरम् अप्राप्य चिन्तया एव मम पत्नी दिवङ्गता" इत्येतं विषयं स्मरन् राजा कुपितः। तद्दिने एव सः नगरस्य महाद्वारे एकं फलकं लेखितवान्- "दण्डकारण्ये निवसतः मयूरस्य मांसं यः खादति सः चिरञ्जीवी भविष्यति। जरामरणयोः भीतिः तस्य न भवति" इति।

एतस्य महाराजस्य मरणानन्तरम् आगतः सुवर्णमयूरस्य ग्रहणार्थम् अन्यं व्याधं नियोजितवान्। तेनाऽपि किमपि प्रयोजनं न सिद्धम्। एवम् एव षड् राजानः क्रमशः दिवङ्गताः।

सप्तमः महाराजः अपि भित्तौ स्थितं फलकं दृष्टवान्। सः अपि मयूरस्य ग्रहणार्थं

व्याघ्रं नियोजितवान्। एषः व्याधः महता प्रयत्नेन तं सुवर्णमयूरं ग्रहीतुं शक्तवान्। मयूरं आनीय महाराजस्य हस्ते दत्तवान् च।

सुवर्णमयूरस्य शरीरकान्ति दृष्ट्वा महाराजः आश्चर्यचकितः। मयूरविषये गौरवं प्रदर्शयन् सः आत्मनः पार्श्वे एव तदर्थं सिंहासनम् उपकल्पितवान्।

तदा मयूररूपेण स्थितः बोधिसत्वः पृष्टवान्- 'मां किमर्थं अत्र आनायितवान्' इति।

"भवतः मांसं यः खादति तस्य जरामरण-भीतिः न भविष्यति इति श्रुतम्"।

"एवं तर्हि भवान् मां मारयति?"

"आम्" इति उक्तवान् राजा।

"मूर्ख! मम एव मरणम् अपरिहार्यम्। एवं स्थिते मम मांसतः चिरञ्जीवित्वं कथं सिध्येत?"

"भवान् सुवर्णनिर्मितः अपूर्वः किल? अतः जनाः एवं वदन्ति इति मन्ये।"

"तथा किमपि नास्ति। सुवर्णवर्णः मया कथं प्राप्तः इति जानाति वा? अहं पूर्वम् अस्य देशस्य राजा आसम्। तदा अहं न्यायेन धर्मेण च राज्यपरिपालनं कृतवान्।अतः एव सुवर्णमयूरत्वेन जन्म प्राप्तवान्"।

तदा काशीराजः आश्चर्येण पृष्टवान्- "धर्मपरिपालनस्य फलं वा एतत्? कथं विश्व-सिमि एतत्? भवतः वचनं प्रमाणीकर्तुं कोऽपि आधारः अस्ति वा?"

"अथ किं? यदा अहं महाराजः आसम् तदा रत्नखचितेन रथेन सञ्चारं करोमि स्म। स च रथः भवतः उद्याने सरोवरस्य पार्श्वे भूमौ इदानीम् अपि अस्ति" इति उक्तवान् बोधिसत्वः।

काशीराजः यदा भूमिं खानितवान् तदा सः दिव्यः रथः दृष्टः। अपूर्वं तं सुवर्णरथं दृष्ट्वा सः आश्चर्यचकितः अभवत्।

तद्दिनात् आरभ्य राजा बोधिसत्वं स्वगुरु-त्वेन भावितवान्।






अस्माकं नद्यः –

# गङ्गा–२

अयोध्यायाः राजा सगरः कदाचित् कश्चित् यज्ञं कृतवान्। यज्ञाङ्गतया अलङ्कृतः बलिष्ठः अश्वः दिग्विजयार्थं प्रेषितः। अश्वस्य उपरि ध्वजः स्थापितः आसीत्। राजकुमाराः सैनिकाः च एतम् अश्वम् अनुसृतवन्तः। यज्ञाश्वः अनेकेषु राज्येषु भ्रमणम् अकरोत्।

कदाचित् इन्द्रः अश्वरक्षकाणाम् अजागरूकतायाः सदुपयोगं स्वीकुर्वन् राक्षसरूपेण आगत्य यज्ञाश्वं चोरितवान् पातालं नीत्वा कपिलाश्रमे स्थापितवान् च।





षष्टिसहस्रसङ्ख्याकाः सगरपुत्राः अश्वम् अन्विष्यन्तः सर्वत्र अटितवन्तः। अन्ते पाताले अटनसमये कपिलाश्रमे अश्वं दृष्टवन्तः। 'कपिलः एव अश्वं चोरितवान्' इति चिन्तयन्तः ते राजकुमाराः निर्दोषिणं कपिलम् अपमानितवन्तः।



राजकुमाराणाम् अविवेकेन कुपितः कपिलमुनिः महता कोपेन- 'भवन्तः भस्मीभवन्तु' इति शापं दत्तवान्। अपरक्षणे एव राजकुमाराः सर्वे दग्धाः।

अनेकवर्षाणाम् अनन्तरम् सगरस्य पौत्रः अंशुमान्- "मम पितॄन् जीवयतु" इति कपिलं प्रार्थितवान्। "ब्रह्मकमण्डलुतः आगतं गङ्गाजलं यदि एतं भस्मराशिं स्पृशति तर्हि सगरपुत्राः एते उज्जीविताः भवन्ति" इति उक्तवान् कपिलः।






कालान्तरे सगरस्य प्रपौत्रः भगीरथः स्वपूर्वजान् उद्धर्तुम् इच्छन् ब्रह्माणम् उद्दिश्य तपः आरब्धवान्। केनापि प्रयत्नेन पूर्वजाः उद्धर्तव्याः इति तस्य दृढनिश्चयः। तपसा तुष्टः ब्रह्मा स्वकमण्डलुतः गङ्गाजलं निस्सारयितुम् अङ्गीकृतवान्।

स्वर्लोकात् आगतस्य गङ्गाप्रवाहस्य आघातं सोढुं भूमिः न शक्नोति इति भगीरथः ज्ञातवान् । 'भूमौ पतन्तं गङ्गाप्रवाहं धर्तुं शिवः केवलं समर्थः' इति सः जानाति स्म । अतः सः एतदर्थं शिवं प्रार्थितवान् । शिवः भगीरथप्रार्थनाम् अङ्गीकृतवान् । गङ्गां शिरसि धृतवान् च ।






शिवस्य शिरोभागतः अवतीर्णा गङ्गा भगीरथम् अनुसृत्य प्रस्थिता । यत्र यत्र गङ्गा गतवती तत्र सर्वत्र भूमिः सस्यश्यामला जाता ।

भगीरथः गङ्गाप्रवाहं पातालं नीतवान् । कपिलाश्रमस्य समीपे स्थितः भस्मराशिः गङ्गाजले निमग्नः अभवत् । एतेन षष्टिसहस्रसङ्ख्याकाः पुत्राः उज्जीविताः। भगीरथस्य प्रयत्नः सफलः जातः ।





गङ्गानदी 'अतीव पवित्रतमा' इति ख्याता अस्ति । गोमुखात् एव उद्भूता, गङ्गोत्र्यां स्पष्टरूपेण प्रकटीभूता एषा पवित्रे क्षेत्रे हृषीकेशे प्रवहन्ती पर्वत-प्रदेशेषु अग्रे सरति ।

गङ्गातीरे स्थितेषु पुण्यक्षेत्रेषु हरिद्वारं वारणसी इत्यादयः सुप्र-सिद्धाः । एतत्क्षेत्रद्वयम् अपि अतीव पुरातनम् । सहस्रशः भक्ताः प्रतिदिनम् अत्र आगच्छन्ति ।






गङ्गातीरे विद्यमानम् अन्यत् प्रसिद्धं नगरं कलकत्ता । एतत्प्रान्ते प्रवहन्तं प्रवाहं 'हूग्ली' नाम्ना आह्वयन्ति । कलकत्तातः अग्रे एषा नदी बहुधा विभक्ता भवति । बङ्गालप्रदेशे व्याघ्राणां निवासास्थाने 'सुन्दरबान्स्' अरण्ये प्रवहन्ती अन्ते समुद्रं प्रविशति च ।




# वास्तविकः वैद्यः

पूर्वं भीमेश्वरः नाम राजा आसीत्। सः धर्मेण राज्यं परिपालयति स्म। तस्य सचिवाः अपि श्रद्धया कार्यं निर्वहन्ति स्म। सर्वे अधिकारिणः अपि स्वीयं कार्यभारं यथानियमं समापयन्ति स्म। तस्य आस्थाने कवयः पण्डिताः सङ्गीतज्ञाः नर्तकाः वैद्याः च आसन्। महाराजः सर्वान् अपि समानया दृष्ट्या पश्यति स्म।

धर्मभीरुः सः कदाचित् अपि कस्याऽपि विषये पक्षपातं न कृतवान्। प्रजानां अहितकार्यं न आचरितवान्। दैवविषये तस्य परमा भक्तिः अपि आसीत्। अतः सः अनेकान् देवालयान् निर्मापितवान्। सततं पूजनार्थं व्यवस्थां च कल्पितवान्। प्रजानां कदापि अन्याय्यं न भवेत् इति तस्य दृष्टिः। अतः न्यायाङ्गणं सदा उद्घाटितं भवेत् इति आज्ञाम् अपि कृतवान् आसीत् सः।

एकदा सः केनचित् महारोगेण पीडितः अभवत्। तेन कारणेन शरीरं असह्यवर्णयुतं जातम्। विचित्रैः काल्कैः तदीयं शरीरं व्याप्तम्। बहु विरूपं जातं च। आस्थानवैद्याः तं व्याधिं परिहर्तुम् असमर्थाः अभवन्।

राजधान्यां वीरवरः नाम वैद्यः आसीत्। तस्य पूर्वजाः सर्वे अपि वैद्यशास्त्रे प्रसिद्धाः। तस्य पिता पूर्वं एतादृशविलक्षणरोगस्य औषधं दत्तवान् आसीत्। वीरवरः अपि समर्थवैद्यः। महाराजस्य रोगस्य औषधं वीरवरः अपि जानाति स्म। अतः सः औषधं निर्माय महाराजाय दातुम् आस्थानम् आगतवान्।

किन्तु राजास्थाने ये वैद्याः आसन् ते सर्वे अनेकान् प्रश्नान् पृष्ट्वा एषः वैद्यशास्त्रे पारङ्गतः अस्ति इति ज्ञातवन्तः। ते सर्वे असूयया पीडिताः अभवन्। 'यदि एषः महाराजाय औषधं ददाति तर्हि राजा गुणग्रुखः



भविष्यति। तदा राजा अस्मान् असमर्थान् चिन्तयिष्यति। एषः वीरवरः महाराजस्य दृष्ट्या सर्वश्रेष्ठः भविष्यति। वयं सर्वे तिरस्कृताः भविष्यामः। अस्माकं गौरवं निर्गमिष्यति' इति चिन्तयित्वा ते "वयं बहुकालात् आरभ्य वैद्यशास्त्रे प्रसिद्धाः। वयम् एव एतस्य रोगस्य निवारणं न ज्ञातवन्तः। भवान् तु बालकः इव। भवान् किं वा करिष्यति? भवतः औषधेन विकृतः परिणामः यदि भवेत् तर्हि वयं बद्धाः भविष्यामः। भवतः अपि कारागृहवासः निश्चितः। अतः राजदर्शनम् एव मास्तु। गच्छतु, गच्छतु" इति उक्त्वा वीरवरं प्रेषितवन्तः।

वीरवरः निराशया प्रतिनिवृत्तः। तथापि आस्थानिकानां मनः परिवृत्तं भवेत् इति आशया सः बहुवारं राजभवनस्य समीपं गतवान्। तदा सर्वदा आस्थानवैद्याः तं तर्जयित्वा प्रतिप्रेषितवन्तः। अन्तः प्रवेष्टुम् अवकाशम् एव न दत्तवन्तः।

एकवारं वीरवरः राजभवनतः आगच्छति स्म। तदा सः एकं व्याधिपीडितं दृष्टवान्। तस्य शरीरम् अपि महाराजस्य शरीरम् इव विकृतम् आसीत्। शरीरे विचित्रकालकाः आसन्। वीरवरः तस्य रोगिणः समीपं गत्वा परीक्षां कृतवान्। महाराजस्य एतस्य च समानः व्याधिः इति तस्य मनसि निश्चयः जातः। वीरवरः तस्मै औषधं दत्तवान्। औषधेन तस्य रोगिणः शरीरे स्थिताः कालकाः निर्गताः। रोगी स्वस्थः जातः च।

एवमेव कालः अतीतः। राजा एकवारं अङ्गरक्षकैः सह उद्यानं गच्छन् आसीत्। मार्गे एव सा धर्मशाला आसीत्। महाराजं दृष्ट्वा सः रोगी नमस्कारं कृतवान्। तं दृष्ट्वा राजा आश्चर्यचकितः अभवत्। राजा तं बहुवारं पूर्वमपि दृष्टवान् आसीत्। "एतस्य शरीरे अपि मम शरीरे इव असह्याः कालकाः आसन्। इदानीं तु ते नष्टाः। कथम् एषः रोगमुक्तः जातः?" इति महान् कुतूहलः उत्पन्नः महाराजस्य मनसि।

अङ्गरक्षकाणां द्वारा राजा तम् आहूय

रोगनिवृत्तिकारणम् पृष्टवान्। सः उक्तवान्- ''स्वामीन्! एतस्मिन् नगरे एव एकः युवकः अस्ति। तस्य नाम वीरवरः इति। सः वैद्यशास्त्रपारङ्गतः। स्वभावतः अतीव सरलः च। दैववशात् एकस्मिन् दिने मार्गे गमनसमये मां दृष्टवान्। सः मम समीपम् आगतवान्। मम शरीरं परीक्षितवान् च। अनन्तरं सः किमपि दिव्यौषधं दत्तवान्। तेन मम व्याधिः दूरीकृतः अभवत्'' इति।

तत् श्रुत्वा महाराजः चिन्तितवान्- 'मम राज्ये एव एतादृशः वैद्यः अस्ति वा? कथं सः मया एतावत्पर्यन्तं न दृष्टः?' इति।

राजा वेषान्तरेण वीरवरस्य गृहं गतवान्। कृपया मम रोगं दूरीकरोतु' इति वीरवरं प्रार्थितवान्। वीरवरः तस्मै अपि तदेव दिव्यौषधं दत्तवान्।

वीरवरस्य औषधेन विंशतिदिनाभ्यन्तरे महाराजस्य रोगः दूरङ्गतः। अनन्तरं राजा कृतज्ञतां समर्प्य गन्तुम् उद्युक्तः। तदा वीरवरः उक्तवान्- ''लक्षजनेषु एकः एतेन रोगेण पीडितः भवेत्। बहवः वैद्याः एतस्य निवारणोपायं नैव जानन्ति। अहं तु मम पितुः सकाशात् एतत् औषधम् ज्ञातवान्। अस्माकं राजा अपि एतेन एव रोगेण पीडितः। अहं औषधं ज्ञात्वा अपि दातुं असमर्थः अस्मि। मम सा एव चिन्ता'' इति।

''किमर्थं महाराजाय औषधं दातुं भवान् असमर्थः? गत्वा महाराजं पश्यतु। अहं औषधं



जानामि इति वदतु'' इति उक्तवान् राजा।

वीरवरः तदीयदर्शनार्थं कृतं प्रयत्नं, तत्र आगतं विघ्नं च सविवरणं निवेदितवान्। तदा राजा आस्थानवैद्यानां कपटबुद्धिं ज्ञातवान्।

'वीरवराय एव प्रधानवैद्यपदवीं ददामि' इति राजा निश्चयं कृतवान्। ''वीरवर, अहम् एव अस्य देशस्य राजा अस्मि। भवतः विषयं ज्ञात्वा रूपान्तरेण स्वयमेव आगतवान्। श्वः राजपरिवारः सकलराजलाञ्छनैः भवतः गृहम् आगमिष्यति। भवान् एव प्रधानवैद्यः भविष्यति। इतःपरं एतस्मिन् कुटीरे भवतः वासः मास्तु'' इति उक्तवान् राजा।

वीरवरः महाराजं नमस्कृत्य ''महाराज, क्षाम्यतु। अहं तादृशीं उन्नतां पदवीं न इच्छामि। मम अत्रैव तृप्तिः अस्ति'' इति उक्तवान्।

''किमर्थं भवान् उन्नतपदवीं न इच्छति?'' इति पृष्टवान् राजा।

''यदि अहं राजमन्दिरं प्रविशामि तर्हि मम जनानां च मध्ये सम्बन्धः न भविष्यति। सामान्यानां जनानां सेवया एव मम सौख्यं सिध्यति। मम तु धनस्य उन्नतस्थानस्य वा आशा नास्ति। मम वैद्यकीयज्ञानं सर्वेषां सेवार्थं, न तु केषाञ्चित् एव सेवार्थम्'' इति वीरवरः उक्तवान्।

वीरवरस्य वचने सत्यांशः अस्ति इति राजा ज्ञातवान्। अतः सः उक्तवान्- ''वीरवर, भवान् एव समर्थः वैद्यः। भवान् मम प्रजासु अन्यतमः इति मम महान् सन्तोषः। भवान् सामान्यानां सेवां करोतु। अहं कोषागारतः यथेष्टं धनं दास्यामि। नूतनां वैद्यशालां निर्मापयिष्यामि'' इति।

सन्तुष्टः वीरवरः उक्तवान्- ''महाप्रभो, अहं धन्यः! मम तु वैद्यशालायाः स्थापने इच्छा आसीत्। किन्तु आर्थिकशक्तिः न आसीत्। इदानीं सा समस्या परिहृता। अहं कृतज्ञः अस्मि'' इति।

महाराजः ससन्तोषं राजभवनं प्रत्यागतवान्।



रत्नपालः औषधं स्वीकृत्य स्वग्रामं प्रत्यागतवान्। अनन्तरकाले भुवनेन्द्रमहर्षिणा यथा उक्तं तथैव प्रवृत्तम्। रत्नपालः हताशः जातः।

'यः स्वपुत्रः न, तं मम पत्नी प्रीत्या लालयति किल?' इति खेदेन रत्नपालः कदाचित् पत्नीम् उक्तवान्- "अस्माकम् औरसः पुत्रः केषाञ्चित् वर्षाणाम् अनन्तरम् अस्माकं समीपम् आगमिष्यति। यदि एतं भवती प्रीत्या लालयति तर्हि कालान्तरे एतं दास्याः वशे अर्पयितुं भवत्याः क्लेशः भवेत्। अतः इदानीम् एव जागरूका भवतु। अस्माकं दुरदृष्टस्य कारणेन एवं प्रवृत्तम्। एतं विषयं रहस्यं स्थापयन्तः मानं रक्षयामः" इति।

पत्युः वचनेन रत्नपालपत्नी बहु खिन्ना। अनन्तरं सा पुत्रं दासीवशे अर्पितवती। सेवकैः पोष्यमानः सः बालकः सेवकवृत्तिम् आश्रित्य सर्वेषाम् अनादरपात्रः अभवत्।

रत्नपालस्य केचन स्नेहिताः एतत्सर्वं परिशील्य 'अस्य कारणं किम्' इति पृष्टवन्तः। तदा रत्नपालः उक्तवान्- "ममकारण विना एषः पालनीयः इति भुवनेन्द्रमहर्षिणाम् आज्ञा अस्ति" इति।

एवम् एव दशवर्षाणि अतीतानि। एकदा रत्नपालेन श्रुतं यत् गोपालयोगी नाम कश्चन संन्यासी ग्रामम् आगतवान् इति। रत्नपालः



तत्क्षणे एव संन्यासिनः दर्शनार्थं प्रस्थितः।

रत्नपालः यदा गोपालयोगिनः समीपं गतवान् तदा सः काञ्चित् स्त्रियं वदति स्म- "भवती मातापुत्रयोः मध्ये मतिभेदम् उत्पाद्य तौ परस्परं दूरीकृतवती। एतत् एव भवत्याः कष्टस्य मूलम्। इदानीं भवती तौ मातापुत्रौ योजयतु। तेन कष्टपरिहारः भविष्यति" इति।

रत्नपालः कोपेन गोपालयोगिनः समीपं गत्वा पृष्टवान्- "अये! भवान् स एव किल, यः पूर्वं भुवनेन्द्रस्वामिनाम् आश्रमे परिचारकः आसीत्?" इति।

"आम्" इति शान्तस्वरेण उक्तवान् गोपालयोगी।

तदा रत्नपालः कोपेन पृष्टवान्- "अये,

भवान् शापेन मातापुत्रौ पृथक्कृतवान् किल ? भवतः का गतिः भवेत् ?" इति।

गोपालयोगी मन्दहासपूर्वकम् उक्तवान्- "वस्तुतः मया कोऽपि न पृथक्कृतः। इदानीं भवतः गृहे यः अस्ति सः भवतः औरसः पुत्रः एव" इति।

रत्नपालः आत्मनः अविवेकार्थं खेदं प्रकटयन् साष्टाङ्गं नमस्कृत्य ततः निर्गतवान्।

वेतालः एवं कथां समाप्य अपृच्छत्- "राजन् ! यः रत्नपालस्य गृहे अस्ति सः वस्तुतः तस्य औरसपुत्रः न किल ? तथापि 'सः एव भवतः औरस पुत्रः' इति गोपालयोगी किमर्थम् उक्तवान् ? किं सः असत्यम् उक्तवान् ? आत्मना पूर्वं कृतेन अविवेकेन खिन्नः सः एवम् उक्तवान् वा ? एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा छिन्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्- "भुवनेन्द्र-महर्षिणः उत्तराधिकारी गोपालः असत्यम् उक्तवान् स्यात् इति चिन्तनं तु अयुक्तम् एव। रत्नपालेन अनुभूतस्य कष्टस्य कारणं तदीयः मनोभावः एव। रत्नपालः भुवनेन्द्र-महर्षिणः वचनस्य गूढार्थं ज्ञातुं न शक्तवान्। तदीयः अहङ्कारः अत्र अवरोधकम् आसीत्। सज्जनानाम् शापाः न बाधन्ते इति महर्षिणा उक्तम् आसीत्। तथापि सः पुत्रं दास्याः वशे दत्तवान्। एवं च रत्नपालस्य औरसः पुत्रः दासः अभवत्।

भुवनेन्द्रमहर्षिः दैवज्ञः। भविष्यं जानन् सः रत्नपालस्य पुत्रविषये काञ्चित् कथां प्रकल्प्य उक्तवान्। ज्ञातस्य सर्वस्य साक्षात्-कथनं न उचितं किल ? रत्नपालस्य गृहे यत् प्रवृत्तं अत्र रत्नपालस्य धनमदः अविवेकः अहङ्कारश्च कारणम्।"

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः शवसहितः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# धनिकस्य दुराशा

कस्मिंश्चित् ग्रामे रामनाथः नाम कृषिकः आसीत्। तस्य तु अल्पा भूमिः। किन्तु व्ययः महान्। अतः सः ग्रामधनिकस्य हस्ततः ऋणं स्वीकरोति स्म। ऋणभारः दिने दिने वर्धते।

एकदा रामनाथः धनिकसमीपं गत्वा उक्तवान्- "भवान् कथं बहुधनं सम्पादयति? माम् अपि तत् रहस्यं निवेदयतु" इति।

धनिकः उदासीनभावनया उक्तवान्- "रे मूर्ख! एतावत् अपि न जानाति वा? धनसम्पत्तिः तु रामस्य अनुग्रहेण प्राप्यते।"

रामनाथः धनिकस्य वचनेषु विश्वसितवान्। 'रामस्य सकाशात् धनं प्राप्तव्यम्' इति चिन्तयन् सः गृहतः प्रस्थितः एव। तस्य पत्नी पाथेयरूपेण रोटिकात्रयं निर्माय दत्तवती।

रामनाथः मार्गे ब्राह्मणं दृष्ट्वा तस्मै एकां रोटिकां दत्त्वा प्रार्थितवान्- "आर्य! अहं रामेण मेलितुं प्रस्थितः। यदि भवान् मार्गं जानाति तर्हि कृपया सूचयतु" इति।

ब्राह्मणः रोटिकां तु स्वीकृतवान्। आकाशस्य दिशि दृष्टिं प्रसार्य ततः निर्गतः च।

रामनाथः ततः अग्रे गतवान्। तत्र योगिनं दृष्ट्वा तस्मै रोटिकां दत्त्वा पृष्टवान्- "महात्मन्! रामसमीपं गन्तुं कः मार्गः" इति।

योगी तु किमपि अनुक्त्वा एव स्वमार्गम् अनुसृतवान्। रामनाथः इतोऽपि अग्रे गतः। तदा मार्गे कश्चन निर्धनः वृद्धः मिलितवान्। रामनाथः तृतीयां रोटिकाम् अपि तस्मै दत्तवान्। सः वृद्धः तां रोटिकां खादितवान्। पृष्टवान्-"सहोदर! कुत्र गच्छति"।

"रामस्य सकाशात् धनं लभ्येत इति मया श्रुतम्। किन्तु तत्र कथं गन्तव्यम् इति अहं न जानामि। कोऽपि न सूचयति अपि। भवान् जानाति वा तदीयं वासस्थलं?" इति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

पृष्टवान् रामनाथः ।

निर्धनः मन्दहासं प्रकटयन् उक्तवान्- "सः रामः अहम् एव । भवता अन्यत्र कुत्रापि गन्तव्यं नास्ति । अहं भवते एकं शङ्खं ददामि । तस्य उपयोगविधिम् अपि सूचयामि । भवान् यद्यत् इच्छति तत्सर्वं ददाति एषः शङ्खः" इति ।

सः वृद्धः रामनाथाय शङ्खं दत्त्वा तस्य उपयोगार्थं क्रमम् अपि सूचितवान् । रामनाथः शङ्खं स्वीकृत्य गृहं प्रत्यागतवान् । तद्दिनात् आरभ्य सः यद्यत् आवश्यकं तत्सर्वं प्राप्तुं शक्तवान् अपि ।

एवंस्थिते एकदा ग्रामस्य धनिकः शङ्खविषयं ज्ञात्वा रामनाथस्य शङ्खं चोरितवान् एव ।

शङ्खः प्राप्तः चेदपि तस्य उपयोगक्रमं धनिकः न जानाति स्म । 'धनिकः एव मम शङ्खं चोरितवान्' इति रामनाथः ज्ञातवान् । अतः सः धनिकस्य गृहं गत्वा शङ्खं ददातु इति पृष्टवान् ।

"शङ्खम् अहं प्रत्यर्पयामि। किन्तु शङ्खतः भवान् यावत् प्राप्नोति ततोऽपि द्विगुणितं मया प्राप्येत । एतत् भवान् यदि अङ्गीकरोति तर्हि प्रत्यर्पयामि" इति उक्तवान् धनिकः ।

अनिवार्यतया रामनाथः एतत् अङ्गीकृतवान् । यतः तदीयः जीवनाधारः किल शङ्खः ? तद्दिनात् आरभ्य रामनाथेन यावत् प्राप्यते ततः द्विगुणितं प्राप्नोति स्म धनिकः ।

'धनिकः केन उपायेन शिक्षणीयः' इति तीव्रं चिन्तयित्वा रामनाथः एकम् उपायं प्राप्तवान् । तद्दिने सः शङ्खं वादयन् प्रार्थितवान्' "मम एकम् नेत्रं अपगच्छतु" इति । रामनाथः एकेन नेत्रेण विहीनः अभवत् । धनिकस्य तु नेत्रद्वयम् अपि गतम् ।

एतेन भीतः धनिकः स्वनियमं प्रतिस्वीकृतवान् । रामनाथः शङ्खमहिम्ना पुनः दृष्टिं प्राप्तवान् ।





# धर्मदेवता

पूर्वं कुण्डलिनीराज्यं सत्यानन्दः नाम राजा पालयन् आसीत्। सः धर्मनिष्ठः। धर्मार्थं प्राणान् अपि अर्पयितुं सिद्धः। धर्माचरणे स्वजनपक्षपातः बन्धुप्रीतिः वा अवरोधं न जनयति। तस्य कुलदैवं धर्मदेवता एव। धर्मदेवतायाः पूजनं विना सः जलकणम् अपि न स्वीकरोति स्म। अतः एव धर्मदेवता तस्य विषये सुप्रसन्ना आसीत्।

त्यागस्वरूपिणः सत्यानन्दस्य पुत्रः श्रवणानन्दः। आत्मनः वार्धक्यं शरीरदौर्बल्यं च दृष्ट्वा सत्यानन्दः श्रवणानन्दं सिंहासने उपवेशयितुं चिन्तितवान्।

एतदनुसारं राजा मन्त्रिभिः प्रजाप्रमुखैः च सह पर्यालोचनं कृतवान्। सर्वेषाम् हार्दिक-प्रोत्साहेन श्रवणानन्दस्य पट्टाभिषेकः सम्पन्नः।

केषाञ्चित् मासानाम् अनन्तरं सत्यानन्दस्य आरोग्यं विषमितम् अभवत्। आत्मनः अन्त्य-कालं जानन् सः पुत्रम् आहूय उक्तवान्-"पुत्र! धर्माचरणसन्दर्भे कोऽपि सन्देहः उत्पन्नः चेत् राज्यस्य दक्षिणदिशि स्थितं देवालयं गत्वा धर्मदेवतां प्रार्थयतु। तदा भवतः सन्देहः परिहृतः भविष्यति" इति।

अनन्तरम् अल्पे एव काले सत्यानन्दः दिवङ्गतः। पितुः मरणानन्तरं श्रवणानन्दः पूर्वजानां परम्पराम् अनुसरन् न्यायेन राज्यं पालयन् धर्ममूर्तिः इति कीर्तिं प्राप्तवान्।

एवं स्थिते कदाचित् श्रवणानन्दस्य पुरतः काचित् धर्मसमस्या आगता।

श्रवणानन्दस्य कुमारी मालती। सा इदानीं कस्मिंश्चित् सामान्ये सामन्तराजकुमारे प्रीति-मती आसीत्। श्रवणानन्दः पुत्र्याः विरोधं कर्तुं न इच्छति। यतः सा तस्य प्रीतिपात्रम् अद्वितीया पुत्री। किन्तु वंशाचारस्य क्रमम् उल्लङ्घयितुमपि न इच्छति। राजधर्मानुसारं



माल्त्याः विवाहः केनचित् उच्चकुलीनेन राजकुमारेण भवितव्यः आसीत्।

यदि पुत्र्याः इच्छां पुरस्करोति तर्हि राजधर्मः उल्लङ्घितः इति कारणेन अधर्मः उत्पद्येत। राजधर्मः पालितः चेत् पुत्री खिद्यति। तर्हि इदानीं किं करणीयम्?

धर्मसमस्यायाः परिहारोपायं चिन्तयतः श्रवणानन्दस्य मनसि पितुः वचनं स्मरणे आगतम्।

'एषा समस्या धर्मदेवतायाः पुरतः स्थापयितुं योग्या' इति चिन्तितवान् सः। अनन्तरं धर्मदेवतायाः मन्दिरं गत्वा भक्त्या नमस्कृत्य स्वसमस्यां निवेदितवान्।

अल्पे एव काले धर्मदेवतायाः विग्रहः अपूर्वकान्त्या प्रकाशमानः अभवत्। "श्रवण! भवान् राजपदवीप्राप्तितः पूर्वं पिता जातः? उत पितृस्थानप्राप्तितः पूर्वं राजा जातः?" इति प्रश्नः विग्रहमुखात् आगतः।

"जगन्मातः! पट्टाभिषेकतः पूर्वम् एव मम विवाहः सञ्जातः। पट्टाभिषेकसन्दर्भे मालती शिशुः आसीत्" इति उक्तवान् श्रवणानन्दः।

"एवं तर्हि माल्त्याः विवाहसमये राजधर्मः भवन्तं न बाधते। भवान् निश्शङ्कतया पितृधर्मं परिपालयतु। भवतः मङ्गलं भवतु" इति उक्तवती धर्मदेवता।

एतत्समनन्तरम् एव विग्रहे कान्तिः न्यूना जाता। श्रवणानन्दः विग्रहं पुनः भक्तिपूर्वकम् नमस्कृत्य स्वभवनं प्रत्यागतवान्।

अनन्तरं शुभे मुहूर्ते मालती यस्य विषये प्रीतिमती आसीत् तम् एव सामन्तराजकुमारं परिणीतवती।

एतदनन्तरं कालान्तरे तस्य पुत्रः नागानन्दः कदाचित् शस्त्रविद्यायाः अभ्याससमये खड्गं चालयन् आसीत्। तत्सन्दर्भे अजागरूकतया सहाध्यायिनः दक्षिणः हस्तः छिन्नः अभवत्। सहाध्यायी तु विरागनामकस्य ब्राह्मणस्य पुत्रः।

विरागः पूर्णायां सभायाम् आगत्य उक्तवान् "अयि भोः महाराज! 'मां खड्गविद्यया पराजयेत' इति आशङ्कया भवतः कुमारः मम पुत्रस्य हस्तच्छेदनं कृतवान्। एतस्य

अपराधस्य दण्डरूपेण भवतः पुत्रस्य अपि दक्षिण-हस्तः छेत्तव्यः। एवं कृत्वा भवान् आत्मनः धर्ममूर्तिः इति ख्यातिं सार्थकीन्करोतु'' इति।

उभयसङ्कटे पतितः श्रवणानन्दः किं करणीयम् इति न ज्ञातवान्। अतः सभां व्याक्षिप्य धर्मदेवतायाः मन्दिरं गतवान्। तत्र स्वसमस्यां निवेदितवान् च।

तत्क्षणे दिव्यकान्त्या मन्दिरं व्याप्तम् अभवत्। धर्मदेवता गम्भीरस्वरेण उक्तवती-''सहाध्यायिनः दक्षिणहस्तस्य छेदनं कृतवतः भवतः पुत्रस्य अपि दक्षिणहस्तः छेत्तव्यः इति किल ब्राह्मणस्य तर्कः? तर्हि एवं भवतु-भवतः पुत्रः येन हस्तेन सहाध्यायिनः हस्तछेदं कृतवान्, तेनैव हस्तेन सहाध्यायी अपि भवतः पुत्रस्य हस्तच्छेदनं करोतु। एषा मम आज्ञा इति ब्राह्मणं निवेदयतु। अकस्मात् प्रवृत्तस्य कृते दण्डनं न उचितम् इति भवान् स्मरतु'' इति।

अपरस्मिन् दिने श्रवणानन्दः विरागाय धर्मदेवतायाः वचनानि उक्तवान्। धर्मदेवतायाः सामर्थ्यं श्रवणानन्दस्य सत्यनिष्ठतां च स्मरन् विरागः मौनम् आश्रितवान्।

तदा राजा उक्तवान्- ''ब्राह्मणोत्तम! दक्षिणहस्तेन हीनः भवतः पुत्रः असहायः न भवेत्। तस्य सुखजीवनार्थं यावत् आवश्यकं तावत् धनं भूमिं च अहं ददामि। भवान् चिन्ताकुलः न भवतु'' इति सान्त्वनवचनानि उक्तवान्, तथैव भूमिं धनं च दत्तवान्।





वैशालिनीराज्यं कुण्डलिनीराज्यस्य पार्श्वे अस्ति। तस्य राजा वसन्तसेनः श्रवणानन्दस्य स्नेहितः। सः कदाचित् स्नेहितं द्रष्टुम् आगतवान्। रात्रौ भोजनानन्तरं वसन्तसेनः- 'मनोविनोदार्थं चतुरङ्गं क्रीडामः' इति उक्तवान्। बाल्यस्नेहितस्य इच्छां निराकर्तुम् असमर्थः श्रवणानन्दः क्रीडनार्थम् उपविष्टवान्।

"पणं विना कथं क्रीडनम्? कमपि पणं निश्चिनोतु। तेन क्रीडायाम् उत्साहः वर्धते" इति उक्तवान् वसन्तसेनः।

श्रवणनन्दः हस्ते धृतं सुवर्णकङ्कणं निष्कास्य पुरतः स्थापितवान्। तत् दृष्ट्वा हसन् वसन्तसेनः उक्तवान्- "आवां महाराजौ। सामान्येन पणेन क्रीडावः चेत् सामान्यानाम् अस्माकं च कः भेदः अवशिष्टः? अहं तु मम राज्यं पणीकरोमि" इति। तदा श्रवणानन्दः अपि अनिवार्यतया राज्यं पणत्वेन स्थापितवान्।

अनन्तरम् 'अन्यः पराजेतव्यः' इति बुद्ध्या उभौ अपि क्रीडायां मग्नौ जातौ। स्पर्धाभावेन उभौ अपि क्रीडितवन्तौ। अन्ते दुरदृष्टवशात् श्रवणानन्दः पराजितः अभवत्। वचनानुसारं श्रवणानन्दः वसन्तसेनाय राज्यं दातुं सिद्धः।

किन्तु एतत् निराकुर्वन् वसन्तसेनः उक्तवान्- "क्रीडा रुचिपूर्णा भवतु इति दृष्ट्या मया पणस्य प्रस्तावः कृतः। वस्तुतः भवतः राज्यं मम किमर्थम्? आवां सदा स्नेहितौ एव। क्रीडाव्याजेन राज्यं वशीकृत्य मित्रद्रोही भवितुम् न इच्छामि अहम्" इति।

श्रवणानन्दः एतत् न अङ्गीकरोति। "भवान् विनोदार्थम् उक्तवान् स्यात्। अहं तु वस्तुतः राज्यं पणत्वेन निश्चितवान्। अहं तु वचनपालकः। अतः इतःपरं मम राज्यं भवदीयम् एव। स्वीकरोतु" इति आग्रहपूर्वकम् उक्तवान् श्रवणानन्दः।

वसन्तसेनः तु राज्यं स्वीकर्तुं सर्वथा न सिद्धः। अन्ते समस्यायाः परिहारार्थं श्रवणानन्दः धर्मदेवतायाः मन्दिरं प्रति प्रस्थितः। वसन्तसेनः तम् अनुसृतवान्।

श्रवणानन्दः धर्मदेवतायै समस्यां निवेद्य परिहारमार्गं सूचयतु' इति भक्तिपूर्वकं प्रार्थितवान्।

एतत्सन्दर्भे विग्रहे काऽपि कान्तिः न दृष्टा। विग्रहतः दुःखपूर्णः स्वरः आगतः- "श्रवण! राज्यम् अन्यस्मै दातुं भवान् कः? स्वीकर्तुं वसन्तसेनस्य वा का अर्हता? राज्यं प्रजानां, न तु भवतः। राजा तु केवलं राज्यस्य योगक्षेमनिर्वाहकः। यथा देवालयस्य धर्मदर्शी भवति तथैव राजा भवति राज्यस्य। राज्यं स्वकीयं मत्वा पणत्वेन निश्चितवान्। भवान् सर्वाधिकारित्वं प्रदर्शितवान्। अतः धर्मबाह्यः जातः।"

धर्मदेवतायाः वचनं श्रुत्वा वसन्तसेनः देवीं नमस्कृत्य ततः निर्गतवान्। श्रवणानन्दः अपि यदा प्रस्थितः तदा देवी- "श्रवणानन्द! राज्यपणेन क्रीडन् भवान् प्रजानां योगक्षेमनिर्वहणदायित्वं विस्मृतवान्। एवं दुराचारी भवान् राजा भवितुं अनर्हः। अनर्हस्य भवतः राज्ये स्थातुम् अहम् अपि न इच्छामि" इति उक्तवती। अपरक्षणे देव्याः शिरः भूमौ पतितम्।

श्रवणानन्दः दुःखभरेण शिरः अवनमय्य राजधानीं प्रत्यागतवान्।

अनन्तरं शुभे मुहूर्ते पुत्रं नागानन्दं सिंहसेने उपवेश्य बोधितवान्- 'पुत्र! एतत् राज्यं प्रजानां, न तु भवतः। भवान् तु केवलं परिपालकः। एतत् कदापि न विस्मरतु। धर्मदेवतां स्वहृदये प्रतिष्ठापयतु" इति।

'धर्मदेतायाः देवालये तपः आचरणीयम्' इति दृढं निश्चित्य अनन्तरदिने श्रवणानन्दः देवीमन्दिरं गतवान्।

मन्दिरे तेन दृष्टं यत् धर्मदेवतायाः शिरः यथास्थाने स्थितम् अस्ति। विग्रहे अपूर्वकान्तिः दृश्यते स्म। एतत् दृष्टवतः श्रवणानन्दस्य चिन्ता निश्शेषं परिहृता।

आवर्णनीयेन आनन्देन पूर्णः सः श्रद्धया साष्टाङ्गपूर्वकं देवीं नमस्कृतवान्।





# भीतिकारणम्

सूर्यनारायणस्य पुत्रः विश्वनाथः। पार्श्वग्रामीणया स्वर्णलतया सह विश्वनाथस्य विवाहः सम्पन्नः। विवाहानन्तरं मातापित्रोः हितवचनानि श्रुत्वा पतिगृहम् आगतवती स्वर्णलता।

गृहम् आगतां स्नुषाम् उक्तवान् श्वशुरः सूर्यनारायणः- "भवत्याः श्वश्रूः अतीव कोपशीला। शीघ्रकोपा सा सर्वदा भवतीं तर्जयेत्। भवती तु तत्सर्वं सोढ्वा तस्याः वचनं परिपालयतु" इति।

स्वर्णलता मौनेन स्वसम्मतिं सूचितवती।

एकदा कूपतः जलम् आनेतुं गता स्वर्णलता किञ्चित् विलम्बेन आगतवती। अतः तस्याः श्वश्रूः कमलाम्बा द्वारे स्थित्वा गर्जितवती- "जलम् आनेतुम् एतावान् विलम्बः वा? नववधूः इव मन्दं चलति किल? एतानि वस्त्राणि कदा क्षाळयति?" इति।

कमलाम्बायाः गर्जनेन स्वर्णलता भीता। भीत्या कम्पमाना सा आत्मानं नियन्त्रियितुं न शक्तवती। जलपूर्णः ताम्रघटः भूमौ पतितः। एतेन क्रुद्धा कमलाम्बा आक्रोशनं कृतवती- "अये चण्डि! जलं तु व्यर्थं जातम्। पात्रम् अपि नाशितवती किल?" इति।

कम्पमाना स्वर्णलता मौनं स्थितवती। तत्सन्दर्भे पार्श्वप्रकोष्ठे स्थितः सूर्यनारायणः पत्नीसमीपं गत्वा शान्तस्वरेण उक्तवान्- "एषा भीता अस्ति। भवती कोपं किञ्चित् नियन्त्रयतु" इति।

पुनः एकदा सर्वे भोजनार्थम् उपविष्टाः आसन्। स्वर्णलता घृतं परिवेषयितुं तत्पात्रं स्वीकृतवती। तदा कमलाम्बा कोपेन उक्तवती- "मया कतिवारं न उक्तम्-विद्रावणं विना घृतं न परिवेषयतु इति? कीदृशी मन्दा बुद्धिः भवत्याः?"इति।

भीत्या कम्पमानायाः स्वर्णलतायाः हस्ततः

"भामहः"

घृतपात्रं पतितम्। घृतं सर्वं मृत्तिकायां विलीनम्।

"अये अनागरिके! उत्तमं घृतं सम्पूर्णं भूमौ पातितवती किल भवती" इति कमलाम्बा स्नुषां निन्दितवती।

स्नुषायाः परिस्थितिं दृष्ट्वा सूर्यनारायणः खिन्नः। सः मृदुवचनैः पत्न्याः सान्त्वनं कृतवान्।

पुनः अन्यदा सायङ्काले स्वर्णलता कूपात् जलम् उन्नयन्ती आसीत्। तदा कोपेन ज्वलन्ती कमलाम्बा तत्र आगत्य- "अये नष्टबुद्धे! चुल्याः उपरि स्थापितं अन्नं दग्धम्। कः खादति तत् अन्नम्? किं कार्यं प्रथमं, किम् अनन्तरम् इति विवेकः एव नास्ति भवत्याः। जलानयनार्थं का त्वरा आसीत्?" इति निन्दितवती।

स्वर्णलता भीता। तस्याः हस्ततः रज्जुः च्युता अभवत्। रज्जुसहितं जलपात्रं कूपे पतितम्। अनन्तरं तस्याः पतिः विश्वनाथः कूपे अवतीर्य पात्रं बहिः आनीतवान्।

अपरस्मिन् दिने स्वर्णलता गोदोहनं कृत्वा क्षीरम् आनयन्ती आसीत्। तदा कमलाम्बा कोपेन पृष्टवती- "किं वदामि भवत्याः मूर्खता-विषये! प्रथमं पिण्याकः दातव्यः किल? पिण्याकखादनं न समाप्तं चेत् गौः क्षीरधाराम् अन्तः एव निगृह्णाति" इति।



कमलाम्बायाः कोलाहलेन स्वर्णलता विभ्रान्ता। क्षीरपात्रं भूमौ पतितम्।

तदा बहिस्तात् आगतः सूर्यनारणः स्नुषाम् पृष्टवान्- "पुत्रि! तद्दिने भवती ताम्रघटं पातितवती। पुनः कदाचित् घृतपात्रं पातितवती। ह्यः कूपे घटः पतितः। अद्य क्षीरपात्रं पतितम्। एवं सर्वदा भवति चेत् कथम्? जीवनं कष्टं किल?" इति।

स्वर्णलता शिरः अवनमय्य अश्रूणि मुञ्चन्ती कम्पमानेन स्वरेण मन्दम् उक्तवती- "अहं किं वा करोमि? यदा अन्यः मां तर्जयति तदा शरीरे कम्पनम् उत्पद्यते। तत् अहं निरोद्धुं न शक्नोमि। तदा किमपि अकार्यं सम्भवति" इति।

तदा सूर्यनारयणः पत्नीम् उक्तवान्- "अये, भवती यदा एतां तर्जयति तदा किमपि अकार्यं सम्भवति। अतः भवती कोपस्य निग्रहं करोतु। अन्यथा जीवनं कष्टकरं भवेत्" इति।

कमलाम्बा कोपं प्रदर्शयन्ती ततः उत्थाय गतवती।

अनन्तरदिने पार्श्वगृहस्था पद्माम्बा कमलाम्बायाः गृहम् आगतवती। तयोः मध्ये वार्तालापः आरब्धः। तन्मध्ये कमलाम्बा स्नुषां जलम् आनेतुं सूचितवती।

स्वर्णलता कार्यान्तरे व्यग्रा आसीत्। अतः जलानयने विलम्बः जातः। स्नुषायाः विषये कोपं प्रकटयन्ती कमलाम्बा पृष्टवती- "आह्वानसमनन्तरम् एव जलम् आनेतुं किं कष्टम् आसीत् भवत्याः ?" इति।

स्वर्णलतायाः शरीरे भयचिह्नानि दृष्टानि। हस्ततः जलपात्रं पतितं च। तदा असमाधानेन कमलाम्बा पद्माम्बाम् उक्तवती- "हन्त ! एतस्याः अकार्यैः अहं श्रान्ता। यदि किमपि वदामि, तर्हि तस्याः हस्ते स्थितं पतितम् इत्येव ! पृष्टं चेत् वदति- किं करोमि ? भीतिकारणतः एवं भवति इति।"

"आं भगिनि ! इदंप्रथमतया यदा एताः श्वशुरगृहम् आगच्छन्ति तदा भीतिः सहजा। मम अपि विवाहानन्तरं किञ्चित्कालं भीतिः आसीत् एव। एतत्परिहरणीयं चेत् एकः एव उपायः- "अस्माभिः स्नुषा प्रीत्या द्रष्टव्या। पुत्रीवत् पालनीया। तदानीम् एवं किमपि न भविष्यति" इति उक्तवती पद्माम्बा।

पद्माम्बायाः वचनं कमलाम्बायाः मनसि प्रविष्टम्। सा कोपं निगृह्णती शान्तिपूर्वकं व्यवहारम् आरब्धवती। कमलाम्बायां जातं परिवर्तनं दृष्ट्वा सर्वे सन्तुष्टाः।

स्वर्णलता बुद्धिमती। वस्तुतः सा न भीरुः। कमलाम्बायाः स्वभावस्य परिवर्तनार्थम् एवम् अभिनीतवती सा। तस्याः पतिः विश्वनाथः अत्र सहकारी आसीत्।






शिवपार्वत्योः विवाहेन सर्वेषां चिन्ताभारः अपगतः। इदानीं सर्वे शुभफलस्य निरीक्षायां सन्ति।

दिनानि तु अतीतानि। किन्तु तारकासुरस्य पीडा दिने दिने वर्धमाना आसीत्। शिवपुत्रस्य जननस्य वार्ता अपि न श्रूयते। देवतानाम् असहना पराकाष्ठतां प्राप्ता।

अन्ते सर्वे देवाः ब्रह्मणः समीपं गत्वा उक्तवन्तः- "पितामह! तारकासुराय भवता दत्तेन वरेण वयं सर्वे तप्यमानाः स्मः। 'शिवस्य विवाहेन जगतः हितं सिद्ध्यति' इति आशा तु आसीत्। इदानीं सा अपि लुप्तप्राया। तारकासुरस्य मरणं विना जगतः हितं न सिद्ध्यति। अतः कष्टपरिहारोपायः भवता एव सूचनीयः" इति।

तदा ब्रह्मा उक्तवान्- "तारकासुराय मया वरः दत्तः इति तु सत्यम्। किन्तु अहं तदा असहायः आसम्। सज्जनः वा दुर्जनः वा भवतु, यः तपः तप्यति सः वरेण अनुग्रहणीयः एव। अन्यथा तस्य तपसा उत्पन्नः अग्निः त्रिलोकम् अपि दहेत्। जगतः परिपालनदृष्ट्या वरः दातव्यः भवति। किन्तु ते तेन वरप्रसादेन लोकं पीडयन्ति। अतः ते मारणीयाः अपि। एतदर्थं वयम् विष्णुसमीपं गच्छामः। आगतां विपत्तिं निवेदयामः" इति।

सर्वे विष्णुसमीपं गत्वा तारकासुरस्य पीडां स विवरणं निवेदितवन्तः। विष्णुः मन्दहासपूर्वकम् उक्तवान्- "शिवः पार्वतीं

७. कुमारसम्भवः

परिणीतवान् किल ? तयोः पुत्रः अस्माकं सर्वेषां कष्टं परिहरिष्यति । इष्टार्थसिद्ध्यै योग्यः कालः सन्निहितः भवेत् । अस्माभिः तावत् प्रतीक्षा करणीया'' इति ।

''शिवपार्वत्योः विवाहानन्तरं बहवः मासाः अतीताः । इदानीम् अपि तयोः पुत्रः न उत्पन्नः । शिवः स्वसुखे तपसि वा मग्नः इति भाति । भवान् कृपया उपकरोतु । शिवः अस्माकं कष्टं यथा जानीयात् तथा भवान् निवेदयतु'' इति देवाः विष्णुं प्रार्थितवन्तः ।

विष्णुः एतत् अङ्गीकृत्य देवैः सह कैलासं गतवान् । कैलासे नन्दीश्वरः तत्सहकारिणः च शिवभवनस्य रक्षणायां निरताः आसन् । विष्णुः नन्दीश्वरं सूचितवान्- ''वयं शिवस्य दर्शनार्थं आगताः'' इति ।

''क्षन्तव्यः अयं जनः । शिवः पार्वत्या सह एकान्ते अस्ति । 'कस्यापि प्रवेशावकाशः न दातव्यः' इति शिवेन आज्ञा कृता अस्ति । शिवस्य आज्ञायाः पालनम् अस्माकं कर्तव्यम्'' इति उक्तवान् नन्दीश्वरः ।

विष्णुः देवानां मुखानि दृष्टवान् । किंकर्तव्यतामूढानां सर्वेषां मुखानि म्लानानि सन्ति । तदा विष्णुः देवान् उक्तवान्- ''भवन्तः पार्थिवलिङ्गं निर्माय शिवपञ्चाक्षरीमन्त्रजपपूर्वकं तत् पूजयन्तु । तेन प्रसन्नः शिवः प्रत्यक्षः भवेत्'' इति ।

विष्णोः वचनानुसारं देवाः मृत्तिकया शिवलिङ्गं निर्माय पञ्चाक्षरीमन्त्रं जपन्तः



षोडशोपचारैः पूजितवन्तः । 'हर हर शम्भो महादेव' इति जयघोषं कृतवन्तः च । तेषां जयघोषेण सर्वाः दिशः व्याप्ताः ।

स्तोत्रप्रियः शिवः एतत् श्रुत्वा भवनात् बहिः आगतः । "देवाः ! किमर्थं मां आहूतवन्तः ?" इति पृष्टवान् च ।

तदा ब्रह्मादयः नमस्कारपूर्वकं प्रार्थितवन्तः- "जगदीश्वर ! तारकासुरस्य पीडा दिने दिने वर्धमाना अस्ति । यज्ञयागादीन् नाशयन् सः ऋषीन् सज्जनान् च पीडयति । तारकासुरसंहारे समर्थस्य भवत्पुत्रस्य प्रतीक्षायां स्मः वयं सर्वे । कृपया अस्मान् अनुगृह्णातु" इति ।

एतत् वचनं श्रुत्वा अभयहस्तं प्रदर्शयन् शिवः उक्तवान्- "चिन्ता मास्तु । सद्यः एव भवतां कष्टानि परिहृतानि भविष्यन्ति" इति । देवाः सर्वे ततः निर्गतवन्तः ।

एतदनन्तरं मार्गशीर्षषष्ठीतिथौ धनिष्ठानक्षत्रे वृश्चिकलग्ने शिवपार्वत्योः पुत्रः उत्पन्नः ।

तस्य शरीरं वज्रसदृशम् आसीत् । द्वादशहस्ताः च आसन् ।

वायुदेवः एतं शिशुं नीत्वा गङ्गातीरे शरवणप्रदेशे स्थापितवान् । एतत् ज्ञातवत्यः कृत्तिकादेवताः गङ्गातीरम् आगत्य षण्मुखयुतं तं शिशुं दृष्टवत्यः । प्रीत्यातिशयेन तस्मै शिशवे स्तन्यं पायितवत्यः । शिवपुत्रः एषः षड्भिः मुखैः षण्णां मातृणां स्तन्यं पीतवान् ।

बालकस्य जन्मवार्तया देवाः सर्वे सन्तुष्टाः । ब्रह्मा स्वयम् आगत्य शिशुं दृष्टवान् ।





तस्य जातकर्म नामकरणादिकं ब्रह्मा एव निर्वर्तितवान् । देवाः ऋषयः च शुभाशीर्वादैः तम् अनुगृहीतवन्तः ।

एषः एव कुमारस्वामी । षण्मुखः स्कन्धः गुहः कार्तिकेयः इत्यपि तस्य नामान्तराणि ।

षण्मुखः षण्मातृणां प्रीत्या देवतानाम् अनुग्रहेण च प्रतिपच्चन्द्रः इव दिने दिने वर्धमानः आसीत् ।

कदाचित् सः शिवधनुः प्राप्तवान् । कुतूहलेन सः धनुः उन्नीय बाणप्रयोगं कृतवान् । तेन क्रौञ्चपर्वतस्य शिखरं खण्डितं जातम् ।

तस्मिन् पर्वते केचन दुष्टराक्षसाः निवसन्ति स्म । बाणप्रयोगं ज्ञात्वा ते कुपिताः । 'अस्माकं वसतिप्रदेशम् उद्दिश्य कोऽयम् उद्धतः बाणप्रयोगं करोति ?'' इति कोपं प्रकटयन्तः ते राक्षसाः युद्धसन्नद्धाः सन्तः आगतवन्तः ।

बाणप्रयोगक्रीडायां निरतं बालं दृष्ट्वा अट्टहासं प्रकटयन्तः आयुधप्रयोगं कृतवन्तः । षण्मुखः तेषाम् आयुधानि लीलाजालं सम्मुखीकुर्वन् सर्वान् दैत्यान् नाशितवान् ।

स्वपुत्रं द्रष्टुम् इच्छन् शिवः नन्दीश्वरद्वारा षण्मुखम् आनायितवान् । कृत्तिकामातरः अपि तत्र आनायिताः । इन्द्रविष्णुब्रह्मादयः सर्वे देवप्रमुखाः अपि आहूताः । नन्दीश्वरः पुष्पकविमानेन सर्वान् आनीतवान् ।

गृहम् आगतं पुत्रं दृष्ट्वा परमसन्तोषं प्रकटयन्तौ पार्वतीपरमेश्वरौ पुत्रं गाढम् आलिङ्गितवन्तौ । कैलासे एतत्सन्दर्भे काचित् महासभा प्रवृत्ता । सभायां मध्ये शिवः पत्नीपुत्राभ्यां सह उपविष्टः आसीत् । तत्पार्श्वे एकत्र ब्रह्मादिदेवाः, अपरत्र नन्दिकेश्वरादिशिवगणीयाः च उपविष्टाः आसन् ।

तदा ब्रह्मा षण्मुखस्य पार्श्वे स्थित्वा उक्तवान्- ''पार्वति ! परमेश्वर ! भवतोः पुत्रः एषः अद्य कैलासम् आगतवान् अस्ति । श्वः शुभे मुहूर्ते एषः सेनापतिस्थाने अभिषिक्तः भवेत् । एतं विषयं सर्वे ऐकमत्येन अङ्गीकुर्वन्ति इति अहं विश्वसिमि । लोककल्याणार्थम् एतत् कार्यम् प्रथमं करणीयम्'' इति ।

ब्रह्मणः वचनेन सर्वे देवाः सन्तुष्टाः ।

पार्वतीपरमेश्वरौ सर्वदेवानां समक्षं षण्मुखस्य उपनयनं कृतवन्तः। ब्रह्मणः पौरोहित्ये षण्मुखः सेनापतिस्थाने अभिषिक्तः अपि अभवत्। कैलासे उत्पन्नः जयघोषध्वनिः समग्रे लोके प्रतिध्वनितः अभवत्।

पार्वतीपरमेश्वरौ पुत्रम् आशिषा अनुगृह्णन्तौ उक्तवन्तौ "पुत्र षण्मुख! भवान् इदानीं देवसेनापतिः। स्वर्गाधिपस्य देवेन्द्रस्य समस्त-लोकस्य च हितं साधयन् भवान् त्रिलोकम् आपदा रक्षतु। दुष्टानां लोककण्टकानां संहारः निर्दयं करणीयः। दीनदुर्बलजनाः सज्जनाः च महता प्रयत्नेन अपि रक्षणीयाः। सर्वेषां प्रीतिं गौरवं च सम्पादयन् भवान् चिरं जीवतु।"

अनन्तरं स्वर्गलोके विश्वकर्मणः साहाय्येन सेनापतियोग्यम् एकं भवनं निर्माय दत्त्वा "पुत्र! भवदर्थम् भवनं निर्मितम् अस्ति। इतः परं भवान् अस्मिन् भवने सुखं निवसतु। सर्वदा कर्तव्यम् स्मरन् लोकोपकारकः भवतु" इति तौ उपदिष्टवन्तौ।

पार्वतीपरमेश्वरौ षण्मुखस्य सेवार्थं कांश्चन रुद्रगणीयान् अपि दत्तवन्तौ। देवाः विविधान् वरान्, अस्त्राणि शस्त्राणि च दत्त्वा "शीघ्रम् एव तारकासुरस्य संहारं करोतु। एतदर्थं अपेक्षिता शक्तिः भवच्छरीरं प्रविशतु" इति आशीर्वादं कृतवन्तः।



षण्मुखः पार्वतीपरमेश्वरयोः उपदेशं शिरसा वहन् स्वसहायकान् आज्ञापितवान्- "इदानीं भवन्तः तारकासुरस्य पत्तनस्य आक्रमणार्थं यद्यत् करणीयं तत् कुर्वन्तु। एतत् एव अस्माकं प्रथमकर्तव्यम्" इति।

षण्मुखस्य आज्ञानुसारं रुद्रगणीयाः कार्यम् आरब्धवन्तः। रणदुन्दुभिध्वनिः सर्वत्र प्रति-ध्वनितः अभवत्।

अत्र शोणितपुरे तारकासुरः स्वर्गलोकस्य सर्वाः वार्ताः सङ्गृह्णन् आसीत्। 'षण्मुखः सेनापतिस्थाने नियोजितः, स्वमारणे व्यवस्थित-योजना आरब्धा अस्ति' इति सः ज्ञातवान् एव। नूतनं देवसेनापतिं सम्मुखीकर्तुं सः अपि सिद्धः अभवत्।



देवलोके षण्मुखः देवगुरुणा बृहस्पतिना निश्चिते शुभे मुहूर्ते युद्धार्थं प्रस्थाप्य, रण-दुन्दुभिं वादयन् देवैः कालरुद्र-वीरभद्रादिभिः, भद्रकाल्या च समेतः शोणितपुरं प्रति प्रस्थितः।

षण्मुखस्य सेना शोणितपुरपर्यन्तम् आगता। शोणितपुरं परितः आक्रम्य स्थिता च।

सेनाशिबिरे उपविष्टः सेनापतिः षण्मुखः देवेन्द्रादीन् पृष्टवान्- "युद्धारम्भतः पूर्वं सन्धिप्रस्तावः करणीयः इति ज्येष्ठाः वदन्ति। सन्धिः विफलः चेत् युद्धं तु अस्ति एव। अतः इदानीं प्रथमं सन्ध्यर्थं प्रतिनिधिं प्रेषयामः इति भाति। एतद्विषये भवताम् अभिप्रायः कः?" इति।

देवाः षण्मुखस्य अभिप्रायम् अङ्गीकृतवन्तः। षण्मुखः स्ववक्षःस्थलतः उत्पन्नं विशाखं दूतत्वेन नियोजयन् उक्तवान्– "विशाख! मत्परतया भवान् तारकासुरसमीपं गत्वा सन्धिप्रस्तावं करोतु। तारकस्य उत्तरं स्वीकृत्य शीघ्रं प्रत्यागच्छतु" इति।

विशाखः शोणितपुरं प्रविष्टवान्। तत्सन्दर्भे तारकः सेनापतीनां सम्मुखे युद्धविषये चर्चां कुर्वन् आसीत्। तदा तत्र आगतं विशाखं दृष्ट्वा तारकः पृष्टवान्- "भवान् कः? किमर्थम् अत्र आगतवान्?" इति।

तदा विशाखः उक्तवान्- "शिवपुत्रेण

तारकासुरः सेनापतीन् आहूय आज्ञापित-वान्- "देवाः सद्यः एव अस्माकं नगरस्य उपरि आक्रमणं कर्तुं सज्जीभवन्तः सन्ति इति वार्ता गुप्तचरैः आनीता अस्ति। तान् सम्मुखीकर्तुं भवन्तः अपि त्वरया सिद्धाः भवन्तु। सेना अपि सदासिद्धा भवतु" इति।

अनन्तरं शिवभक्तः सः तारकासुरः मृत्तिकया शिवलिङ्गं निर्माय बिल्वपत्राणि, नारिकेलफलानि पुष्पाणि, सुगन्धद्रव्याणि च सङ्गृहीतवान्। षोडशोपचारपूर्वकं पूजाम् आरब्धवान्। अभिषेकम्, अलङ्कारं धूपदीपसेवां नैवेद्यं च भक्तिपूर्वकं समर्प्य साष्टाङ्गं नमस्कुर्वन् प्रार्थितवान्- "परमेश्वर! पूजानुगुणेन फलेन अनुगृह्णातु" इति।

षण्मुखेन प्रेषितः दूतः अहम्। सन्धिप्रस्तावार्थं सः मां भवतः समीपं प्रेषितवान्'' इति।

सन्तुष्टः तारकः विशाखाय आसनम् उपकल्प्य पृष्टवान्- ''षण्मुखः कां वार्तां प्रेषितवान्? देवैः सह मम विरोधः, न तु षण्मुखेन सह'' इति।

''तारक! भवान् बहुकालतः त्रिलोकं शासितवान्। भवतः परिपालने प्रजाः सुखेन न आसन्। अतः भवता इदानीं शासनाधिकारः त्यक्तव्यः। एतम् अधिकारम् इन्द्राय दत्त्वा भोगवतीं प्रतिगन्तव्यं च। एतत् यदि न अङ्गीकरोति तर्हि षण्मुखः बलात्कारेण इन्द्राय अधिकारं दापयति। एषा एव वार्ता षण्मुखेन प्रेषिता'' इति निवेदितवान् विशाखः।

तदा तारकासुरः कोपेन ज्वलन् इव उक्तवान्- ''कस्यचित् भयेन अहम् अधिकारं त्यक्तुं न सिद्धः। एतं विषयं भवतः स्वामी प्रथमं जानातु। श्वः अहं युद्धार्थं प्रस्थानं करोमि। भवतः स्वामिनः सन्देशस्य प्रत्युत्तरं युद्धक्षेत्रे दास्यामि। यदि शक्तिः स्यात् तर्हि भवतः स्वामी सन्धिप्रस्तावं परित्यज्य रणरङ्गं प्रविशतु'' इति।

अनन्तरदिने सूर्योदयसमये उभयोः अपि सेना रणरङ्गं प्रविष्टा। उभयपक्षस्य अपि वीराः प्राणमोहं त्यक्त्वा घोरयुद्धे प्रवृत्ताः। तारकस्य पक्षे बाणासुरः, जम्भासुरः, प्रलम्बासुरः, अतिबलः, शम्बासुरः इत्यादयः वीराधिवीराः आसन्। षण्मुखस्य पक्षे तु वीरभद्रः, अग्निहोत्रः, धर्मः भद्रकालः, सूर्यः, चन्द्रः इत्यादयः आसन्।

बहुदिनपर्यन्तं युद्धं प्रवृत्तम्। तारकस्य उत्साहः अक्षीणः एव आसीत्। देवसेना तु निरन्तरयुद्धेन श्रान्ता आसीत्। देवसेनायां सर्वे धैर्यच्युताः सञ्जाताः। अतः षण्मुखः अन्तिमप्रयोगरूपेण पाशुपतास्त्रं प्रयुक्तवान्।

तच्च अस्त्रम् वज्रायुधम् इव दैत्यसैन्यस्य उपरि अपतत्। सेना इतस्ततः विकीर्णा अभवत्। ये युद्धे निरताः आसन्, ते दैत्याः सर्वे ज्वलनेन भस्मीभूताः।





# परोपकारी

पूर्वं बस्रानगरे अजीजनामकः युवकः आसीत्। सः वाणिज्यवृत्तिं कुर्वन् जीवनं यापयति स्म। सः धनवान्, वाणिज्यव्यवहारेषु प्रामाणिकः अपि। तस्य अन्यः अपि विशेष-गुणः आसीत्, यत् विविधक्लेशैः दुःखितानां जनानां साहाय्यं कर्तुं सः सर्वदा सन्नद्धः भवति स्म। अतः तं प्रति बस्रानगरवासिनां महती प्रीतिः आदरः च।

अजीजस्य प्रातिवेशिकगृहे सय्यदः नाम अन्यः वणिक् वसति। सः अजीजस्य प्रख्यातिं जनप्रियत्वं च दृष्ट्वा असूयया तपति। प्रतिदिनं वर्धमानं अजीजस्य वाणिज्यादिकं दृष्ट्वा सय्यदस्य मात्सर्यम् अपि वर्धते। सम्पूर्णां रात्रिं सय्यदः निद्राहीनः सन् एव यापयति। मनोवेदनया दिवा अपि शय्यायां लुठन् प्रलपति। एतादृशं तं दृष्ट्वा तस्य पत्नी भयेन चिन्तामग्ना अभवत्।

एकदा सय्यदस्य पत्नी अजीजस्य समीपं गत्वा, रोदनं कुर्वती 'भवतः ऐश्वर्यं कीर्तिं च दृष्ट्वा मम पतिः असूयया व्याधिग्रस्तः जातः' इति वस्तुस्थितिं कथितवती।

तस्याः वचनानि श्रुत्वा अजीजः- "एतदर्थं चिन्ता मास्तु। भवत्याः पत्युः रोगपरिहारार्थं प्रयत्नं करोमि। सः शीघ्रम् एव स्वस्थः भविष्यति" इति सान्त्वनवचनानि उक्त्वा तां प्रेषितवान्।

तस्यां रात्रौ अजीजः दीर्घम् आलोचितवान्। 'मम ऐश्वर्यं प्रातिवेशिकस्य असूयायाः अनारोग्यस्य च कारणं जातं वा? एतदपेक्षया दारिद्र्यम् एव वरम्' इति चिन्तयन् सः प्रातःकाले गृहं त्यक्त्वा कुत्रचित् गतवान्।

एकाकी अजीजः बहुदूरं चलन् सायङ्काले कस्यचित् जीर्णकूपस्य समीपम् आगतवान्। कूपस्य तीरे आयासपरिहारार्थम् उपविश्य

"अरेबिया कथा"



सः तत्रैव निद्रामग्नः जातः।

परेद्युः प्रातः केचन वणिजः तस्मिन् मार्गे गच्छन्तः अजीजं दृष्ट्वा तस्य समीपम् आगतवन्तः। तं निद्रातः जागरयित्वा स्वसमीपे स्थितं रोटिका-क्षीरादिकं दत्तवन्तः। "भोः अजीज, भवान् किमर्थम् अत्र आगतवान्?" इति पृष्टवन्तः च।

"मम तु जीवने विरक्तिः उत्पन्ना। कृपया कारणं न पृच्छतु। इतः परम् अहं किमपि वाणिज्यं न करिष्यामि। शेषायुष्यम् अत्रैव यापयामि" इति उक्तवान् अजीजः।

अजीजस्य स्वभावं ते वणिजः जानन्ति स्म। अतः ते किमपि अनुक्त्वा तत्र अजीजस्य वासार्थं सर्वां व्यवस्थां कृतवन्तः। मार्गे स्थितेषु ग्रामेषु जनान् 'जीर्णकूपस्य समीपे एकः महात्मा वसति' इति वदन्तः गतवन्तः च।

तां वार्तां श्रुत्वा भिन्नभिन्नग्रामीणाः जनाः तस्य कूपस्य समीपम् आगत्य, अजीजं नमस्कृत्य तस्य वासार्थम् एकां पर्णशालां निर्माय अर्पितवन्तः। अनन्तरं अनेके दुःखित-जनाः स्वीयक्लेशान् तं निवेदयन्ति। अजीजः तान् सान्त्वयन् उचितसूचनाः ददाति। तदा तृप्ताः जनाः अनेकानि उपायनानि तस्मै यच्छन्ति। एवं रीत्या तस्य प्रतिष्ठा पूर्वापेक्षया अधिकतया जाता।

अजीजः वाणिज्यं त्यक्त्वा नगरतः निर्गत्य गतवान् इति विचारं ज्ञात्वा असूयारोगेण पीडितः सय्यदः सन्तुष्टः जातः। अनन्तरं सः क्रमेण पूर्ववत् स्वस्थः जातः।

किन्तु अत्रान्तरे अजीजस्य जीवने जातां नूतनवृद्धिं कीर्तिं च श्रुत्वा सय्यदः पुनः विषादग्रस्तः जातः। सः अजीजं द्रष्टुं प्रस्थितवान्।

एवंरीत्या गच्छन् सय्यदः सायङ्काले अजीजस्य समीपम् आगत्य तं नमस्कृतवान्। शिष्याणां मध्ये उपविश्य वार्तालापे मग्नः अजीजः तं दृष्ट्वा "किं भोः, कुशलं वा? कः विशेषः?" इति पृष्टवान्। सय्यदः "भवन्तम् एकं रहस्यं वक्तुम् आगतवान् अस्मि" इति उक्तवान्।

अजीजः स्वीयशिष्यान् सर्वान् बहिः प्रेषितवान्। तदा सय्यदः "अहं भवतः समक्षं किञ्चित् वक्तुम् इच्छामि। एतस्मिन् स्थाने तत् वक्तुं न शक्यते। किञ्चिद्दूरं गत्वा तत्र निर्जनप्रदेशे वदामि। तत्र गच्छावः" इति उक्तवान्।

"अस्तु गच्छावः" इति उक्त्वा अजीजः उत्थाय सय्यदम् अनुसृतवान्।

उभौ अपि हरिततृणावृतस्य निर्जनकूपस्य समीपं गतवन्तौ। "एतस्मिन् कूपे एकं विचित्रं वस्तु अस्ति। दर्शयामि, आगच्छतु" इति वदन् सय्यदः अजीजं कूपस्य समीपं नीतवान्।

अजीजः अवनम्य कूपं दृष्टवान्। तदा झटिति सय्यदः अजीजं कूपे पातयित्वा, ततः निर्गत्य स्वीयं गृहं गतवान्।

अजीजः तरणं न जानाति। किन्तु कूपे वर्तमानाः जलदेवताः पतन्तम् अजीजं गृहीतवत्यः। ताः देवताः अजीजस्य सद्गुणैः सम्प्रीताः आसन्। बहुकालपर्यन्तं तृणावृतः सः निर्जनप्रदेशः अजीजस्य आगमनानन्तरं मनुष्याणां सञ्चारेण शोभां प्राप्तः आसीत्। अतः अजीजस्य संरक्षणं कृत्वा ताः देवताः तं सोपानस्य उपरि उपवेशितवत्यः।

"भवन्तं दृष्ट्वा वयं अतीव सन्तुष्टाः। भवन्तं द्रष्टुं श्वः महाराजः अत्र आगमिष्यति" इति जलदेवताः उक्तवत्यः।



"किमर्थम् ?" इति पृष्टवान् अजीजः।

"महाराजस्य पुत्री भूताविष्टा अस्ति। भवत्कारणतः सा स्वस्था भविष्यति इति अस्मत्तः महाराजः ज्ञातवान्। भवत्समीपे यः कृष्णवर्णीयः मार्जारः अस्ति, तस्य श्मश्रुकेशम् एकम् निष्कास्य अग्नौ प्रक्षिपतु। तस्य धूमं राजपुत्री जिघ्रति चेत्, भूतः तां त्यक्त्वा निर्गमिष्यति" इति जलदेवताः कथितवत्यः। अनन्तरं जलदेवताः अजीजं कूपस्य उपरि आनीतवत्यः।

अजीजः पर्णशालां प्रविश्य स्वीयकृष्णमार्जारस्य श्मश्रुकेशम् एकं निष्कास्य सुरक्षितं स्थापितवान्।

प्रातःकालः जातः। राजभटाः आगत्य महाराजस्य आगमनवार्तां तस्मै सूचितवन्तः।

अनन्तरं राजकुमारीं तस्य समीपम् आनीतवन्तः। सा उन्मत्ता इव इतस्ततः पश्यन्ती, किमपि किमपि जल्पन्ती तस्य समीपम् आगतवती।

अजीजः जागरूकतया रक्षितं मार्जारकेशं कटाहस्थापिते अग्नौ क्षिप्तवान्। अग्नि-सकाशात् उद्गतं धूमम् आघ्रातुं राजकुमारीं प्रचोदितवान्। तेन सद्यः एव राजकुमारी भूमौ पतितवती। किञ्चित् कालानन्तरं सा दीर्घ-निद्रातः इव, उत्थाय किञ्चित् मौनम् उपविश्य स्वजनकं दृष्ट्वा तस्य समीपं गतवती।

महाराजः अपि आनन्दितः भूत्वा पार्श्वस्थितं सचिवं दृष्ट्वा "एषः महापुरुषः अस्माभिः कथम् आदरणीयः इत्येव न जानामि" इति उक्तवान्।

"प्रभो, राजकुमारीं प्रविष्टं भूतं यः निवारयति, तस्मै एव तां दत्त्वा विवाहं कारयिष्यामि इति भवान् षण्मासेभ्यः पूर्वम् प्रतिज्ञातवान्। किं स्मरणं नास्ति वा ?" इति सचिवः पृष्टवान्।

"किन्तु एषः महापुरुषः अङ्गीकुर्यात् वा ?" इति पृष्टवान् महाराजः।

"तदर्थं अहं प्रयत्नं करोमि" इति उक्त्वा सचिवः अभिप्रायम् अजीजम् उक्तवान्। राजकुमारीं पत्नीरूपेण स्वीकर्तुम् अजीजः अङ्गीकृतवान्। अनन्तरं राजकुमार्या सह अजीजस्य विवाहः वैभवेन सम्पन्नः।

किञ्चित्कालानन्तरं महाराजः दिवङ्गतः। तदा अजीजः एव महाराजपदवीम् अलङ्कृतवान्।

अजीजस्य एतत् महत् अदृष्टं दृष्ट्वा सय्यदः मतिहीनः एव जातः।

एकदा महाराजः अजीजः स्वीयपरिजनैः परिवृतः नगरपर्यटनं कुर्वन् दीनावस्थायां स्थितं अस्पष्टम् आक्रोशं कुर्वन्तं सय्यदं मार्गमध्ये दृष्टवान्। 'एषः सय्यदः' इति ज्ञात्वा, अजीजः तं वैद्यशालां नीत्वा चिकित्सां कारितवान्। अनन्तरं तस्मै सहस्रसुवर्णदीनान् दातुम् अधिकारिजनान् आज्ञापितवान् च।



# आर्कटिकप्रदेशीयाः 'सील्'जलचराः

आर्काटिकसमुद्रप्रदेशे हिमखण्डानाम् उपरि यदा सील्जलचराणां शावकाः मन्दं सरन्ति तदा पीतवर्णेन प्रकाशमानानां तेषां चर्मणः उपरि पतिताः सूर्यकिरणाः अपि पीतायन्ते। मुग्धमुखाः दीर्घनेत्राः एते सील्शावकाः मनोहारिणः भवन्ति।

मार्च-एप्रिल् मासयोः मध्ये उत्पद्यन्तः एते एकसप्ताहात् अधिकं न जीवन्ति। यतः जन्मानन्तरम् एकसप्ताहानन्तरे पीतं तेषां चर्म नीलवर्णतां प्राप्नोति। एवंवर्णपरिवर्तनतः पूर्वम् एव जनाः तान् मारयन्ति, तेषां चर्म सङ्गृह्णन्ति च। एवं प्रतिवर्षं सहस्रशः सील्जलचराः मरणं प्राप्नुवन्ति। तेषां कोमलानि चर्माणि धनिकस्त्रीणां प्रावारकनिर्माणे उपयुज्यन्ते।

अस्य शतकस्य आरम्भे एतेषां सङ्ख्या विंशति मिलियन् आसीत्। इदानीं तु केवलम् एकमिलियन् अवशिष्टम्। "एवम् एव मारणहोम प्रचलति चेत् आगामिदशवर्षेषु एतेषां सन्ततिः एव निर्मूलिता भविष्यति" इति वदन्ति- 'न्यूफौण्डलेण्ड' देशस्य 'ग्रीन्पीस्' संस्थायाः जनाः। एषा संस्था सील्शावकानां मारणम् निरोद्धुं प्रयत्नरता अस्ति।

एतेषु गज-सील् जातीयानां केषाञ्चित् भारः ४ टन्। उन्नतिः च ६ मीटर्। एते जलचराः जले स्थितान् मीनान् जलसर्पान् च खादन्तः जीवन्ति। एतेषां कर्णाः स्पष्टतया न दृश्यन्ते चेदपि श्रवणशक्तिः तु असाधारणी।

एते जलचराः जलस्य उपरि आगत्य श्वासकोषपूर्णं वायुं स्वीकृत्य जले मज्जन्ति। जले तु एतेषां हृदयं मन्दं स्पन्दते। अतः ते बहुकालं यावत् जले स्थातुं शक्नुवन्ति। जले तु एते सञ्चरन्ति तथा चेदपि भूमेः उपरि अलसानाम् इव मन्दा गतिः तेषाम्।



# चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां नवम्बर-८५ मासे प्रकटयिष्यामः।**





❀ उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– **आयासः श्रवसः।**

द्वितीयचित्रम्– **उल्लासः मनसः।**

**प्रेषिका :** यन्. कृष्णवेणी, यस्. के. जि. ओरियण्टल हैस्कूल, प्रोद्दुरु, कडप (आ.प्र.)

# भवन्तः जानन्ति वा? (उत्तराणि)

१. ह्युयेन् त्साङ्ग्। २. चालुक्यवंशे। ३. अल्ला उद्दीन् खिल्जी। ४. १४ वर्षाणि। ५. षाजी बौन्सले।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| आटोपः - | Pride |
| आयः - | Income |
| उद्गिरणम् - | Belch |
| उद्यानायते - | Garden-like |
| एकलः - | Alone |
| कटाहः - | Frying pan |
| कर्कटकः - | Crab |
| कालकः - | Mole |
| घट्टितः - | Dashed |
| चञ्चूः - | Beak |
| चटुलता - | Unsteadiness |
| चतुरङ्गम् - | The game of chess |
| जिघ्रति - | Smells |
| दूतः - | Messenger |
| दोहनम् - | Milking |
| नववधूः - | Newly married girl |
| नारिकेलम् - | Coconut |
| निधिः - | Wealth |
| नियन्त्रयतु - | Control |
| पक्षः - | Feather |
| पणः - | Bet |
| पराकाष्ठा - | The extremity |
| पाथेयः - | Provender for a journey |
| पादमर्दनम् - | Massage of foot |
| पिण्याकः - | Cattle-feed |
| पीतायते - | Yellowish |
| पुच्छम् - | Tail |
| प्राकारः - | Compound |
| प्रातिवेशिकः - | Neighbour |
| प्रावारकम् - | Coat |
| फलकम् - | Board |
| फलसमृद्धिः - | Yield |
| बाष्पम् - | Steam |
| भेरुण्डः - | A kind of bird |
| मक्षिका - | Housefly |
| मशकः - | Mosquito |
| मसृणम् - | Smooth |
| मार्जारः - | Cat |
| मृत्तिका - | Mud |
| रज्जुः - | Rope |
| रिक्तहस्तः - | Empty-handed |
| वातायनम् - | Window |
| विद्रावणं - | To melt |
| वृद्धिः - | Interest |
| शङ्खः - | Conch |
| शलाका- | A thin stick |
| शावकः - | The young of an animal |
| सन्धिः - | Treaty |
| स्तन्यम् - | Mother's milk |
| स्पन्दते - | Throb |

# अतिथिः आगतः

| | |
|---|---|
| गणेशः - हरि ओं नागेश। कुशलं वा ? कदा आगतवान् ? | Hello, Nagesh! How are you? When did you arrive? |
| नागेशः - अर्धघण्टातः पूर्वम् आगतवान्। | Just half an hour before. |
| ग- अद्य मम कार्यालये कार्यम् अधिकम् आसीत्। अतः विलम्बः जातः। अन्यथा अहं सर्वदा ५-३० वादने गृहे भवामि। | I had some heavy work at the office today. That is why I am late. Otherwise, I always return home by 5.30. |
| अये सीते ! नागेशाय काफी दत्ता वा ? | Hi Sita, did Nagesh have coffee? |
| ना- आम्, आम्, इदानीं काफी पीता। | Yes, I had it just now. |
| ग- अस्तु नाम, सीते ! काफीद्वयम् आनयतु। | Well, Sita! get two more cups. |
| ना- मास्तु भोः, भवान् पिबतु। मया तु.... | I don't like to have. You take it. Just now... |
| ग- रे, तूष्णीं तिष्ठतु भोः। मया तु काफी पातव्या एव। भवदर्थम् इत्येव न सज्जीक्रियते। | Right! I must have coffee at this hour. It was not specially prepared for you after all! |
| ना- न हि भोः, अहं काफीम् अधिकं न पिबामि। | No please, I don't take coffee often. |
| ग- एकचषककाफी अधिकं भवेत् वा ? | Would just one more cup make a difference? |
| ना- काफीपाने मम विशेषरुचिः नास्ति। | I don't have a great liking for coffee. |
| ग- तर्हि क्षीरम् आनेतुं वदामि वा ? | Shall I get you milk? |
| ना- पानीयं किमपि मास्तु इदानीम्। | I don't want any drink now. |
| ग- रे, तथा न भवति। मया सह भवता किमपि स्वीकरणीयम् एव। काफी अस्तु वा, उत क्षीरम् ? | It is not good. You must have something with me—coffee or milk? |
| ना- एवं तर्हि यत्किमपि एकम्। | Right, get me anything. |
| ग- तर्हि भवते क्षीरम्, मह्यं काफी। पानीयं स्वीकृत्य किञ्चित् अटित्वा आगच्छावः। | Okey, milk for you and coffee for me. After that, let us go for a walk. |